पुरुषः—( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृश-कर्मकारी ।

प्रथमः—किं शोभनो ब्राह्मण इति कल्पयित्वा राज्ञा प्रतिग्रहो दत्तः ।

पुरुषः—शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

द्वितीयः—पाटच्चर किमस्माभिर्जातिः पृष्टा ।

श्यालः—सूचक कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीत ।

उभौ—यदावुत्त आज्ञापयति । कथय ।

पुरुषः—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

श्यालः—( विहस्य ) विशुद्ध इदानीमाजीवः ।

पुरुषः—

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥

श्यालः—ततस्ततः ।

पुरुषः—एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत्तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयकं दृष्टम् । पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागम-वृत्तान्तः ।

श्यालः—जानुक विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।

रक्षिणौ—तथा । गच्छ अरे गण्डभेदक ।

( सर्वे परिक्रामन्ति )

श्यालः—सूचक इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिद-मङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि।

उभौ—प्रविशत्वावुत्तः स्वामिप्रसादाय।

(निष्क्रान्तः श्यालः)

प्रथमः—जानुक चिरायते खल्वावुत्तः।

द्वितीयः—नन्ववसरोपसर्पणीया राजानः।

प्रथमः—जानुक प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम्।

(इति पुरुषं निर्दिशति)

पुरुषः—नार्हति भावोऽकारणमारणं भावयितुम्।

द्वितीयः—(विलोक्य) एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि शुनो मुखं वा द्रक्ष्यसि।

(प्रविश्य)

श्यालः—सूचक मुच्यतामेष जालोपजीवी। उपपन्नः खल्वस्याङ्गुलीयस्यागमः।

सूचकः—यथावुत्तो भणति।

द्वितीयः—एष यमसदनं प्रविश्य प्रतिनिवृत्तः। (इति पुरुषं परिमुक्तबन्धनं करोति)

पुरुषः—(श्यालं प्रणम्य) भर्तः अथ कीदृशो म आजीवः।

श्यालः—एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः। (इति पुरुषाय स्वं प्रयच्छति)

पुरुषः—(सप्रणामं प्रतिगृह्य) भर्तः अनुगृहीतोऽस्मि।

सूचकः—एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः।

**जानुकः**—आवुत्त पारितोषिकं कथयति तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यमिति।

**श्यालः**—न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन कोऽप्यभिमतो जनो भर्त्रा स्मृतः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।

**सूचकः**—सेवितं नामावुत्तेन।

**जानुकः**—ननु भण अस्य कृते मात्स्यिकभर्तुरिति। ( इति पुरुषमसूयया पश्यति )

**पुरुषः**—भट्टारक इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

**जानुकः**—एतावद्युज्यते।

**श्यालः**—धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। ( इति निष्क्रान्ताः सर्वे )

शाकुन्तलम्।

---

### टीपा

भीतिनाटितकेन—भ्याल्यासारखें दाखवून. भावमिश्रा —' मिश्र '—सन्मान्य मनुष्य.' हा शब्द मोठे व विद्वान् लोक यांच्या नांवापुढें जोडला जातो. जसें आर्यमिश्राः, वसिष्ठमिश्राः।

सूचक व जानुक हीं त्या दोघा रक्षकाचीं नावें आहेत.

रोहितमत्स्यः—एक प्रकारचा मासा. खण्डशः कॢप्—तुकडे करणें. सेवितं नाम आवुत्तेन—नाम—खरोखर.

चिरायते—वेळ लावतो. ' चिर ' पासून नामधातु.

---

### प्रश्न

१ अयं संवादो बालैर्नाटयितव्यः।

२ या उताऱ्यांतील महत्त्वाचीं वाक्यें लिहून त्यांचा अर्थ लिहा.

३ प्रतिवध्नीत, भावयितुम्, दापितः, अवतार्य, प्रतिष्ठापितः, विमर्शयितव्यम् हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

४ जालोद्गालादयः, अनुकम्पामृदुः, यथागमनम्, पत्रहस्तः, गृध्रबलिः, पर्युत्सुकमनाः हे समास सोडवून त्यांचीं नांवें सांगा.

पाठ कराः—चौरैकागारिकस्तेनदस्युतस्करमोषकाः ।
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥

---

# पाठ १३

## स्वभाववर्णनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥
विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ २ ॥
न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ३ ॥

वरं विन्ध्याटव्यामनशनतृषार्तस्य मरणं
वरं सर्पाकीर्णे तृणविहितकूपे निपतनम् ।
वरं गर्तावर्ते गहनजलमध्ये विलयनं
न शीलाद्विभ्रंशो भवतु कुलजस्य श्रुतवतः ॥ ४ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ।

जानुकः—अवृत्त पारितोषिकं कथयति तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यमिति।

श्यालः—न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन कोप्यभिमतो जनो भर्त्रा स्मृतः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।

सूचकः—सेवितं नामावुत्तेन।

जानुकः—ननु भण अस्य कृते मात्स्यिकभर्तुरिति। ( इति पुरुषमसूयया पश्यति )

पुरुषः—भट्टारक इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

जानुकः—एतावद्युज्यते।

श्यालः—धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। ( इति निष्क्रान्ताः सर्वे )

शाकुन्तलम्।

---

टीपा

भीतिनाटितकेन—भ्याल्यासारखें दाखवून. भावमिश्रा—'मिश्र'—सन्मान्य मनुष्य.' हा शब्द मोठे व विद्वान् लोक यांच्या नांवापुढें जोडला जातो. जसें आर्यमिश्राः, वसिष्ठमिश्राः।

सूचक व जानुक ही त्या दोघा रक्षकांची नांवें आहेत.

रोहितमत्स्यः—एक प्रकारचा मासा. खण्डशः क्लृप्—तुकडे करणें. सेवितं नाम आवुत्तेन—नाम—खरोखर.

चिरायते—वेळ लावतो. 'चिर' पासून नामधातु.

---

प्रश्न

१ अयं संवादो बालैर्नाटयितव्यः।

२ या उताऱ्यांतील महत्त्वाचीं वाक्यें लिहून त्यांचा अर्थ लिहा.

३ प्रतिबध्नीत, भावयितुम्, दापितः, अवतार्य, प्रतिष्ठापितः, विमर्शयितव्यम् हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

४ जालोद्गालादयः, अनुकम्पामृदुः, यथागमनम्, पत्रहस्तः, गृध्रबलिः, पर्युत्सुकमनाः हे समास सोडवून त्यांचीं नांवें सांगा.

पाठ कराः—चौरैकागारिकस्तेनदस्युतस्करमोषकाः ।
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥

---

# पाठ १३

## स्वभाववर्णनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥
विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ २ ॥
न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ३ ॥
वरं विन्ध्याटव्यामनशनतृषार्तस्य मरणं
वरं सर्पाकीर्णे तृणविहितकूपे निपतनम् ।
वरं गर्तावर्ते गहनजलमध्ये विलयनं
न शीलाद्विभ्रंशो भवतु कुलजस्य श्रुतवतः ॥ ४ ॥
ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ।

अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ५ ॥

काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके
मूर्खः पण्डितसङ्गमे न रमते दासो न सिंहासने ।
कुस्त्री सज्जनसङ्गमे न रमते नीचं जनं सेवते
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ ६ ॥

सुभाषितानि ।

---

## टीपा

'वर ..न —जी गोष्ट पुरवली किंवा पसंत पडते त्या वाक्यात 'वरम्' व जी गोष्ट नको अथवा त्याज्य त्या वाक्यात 'न–न तु' अशी अव्ययें योजतात. मात्र वरम् व न य्‌चा संबंध प्रथमान्त नामाशीं अथवा वाक्यांशीं असावा—तुमन्ताशीं असू नये.

श्रुतवत.—विद्यावत (श्रुत–विद्या).

---

## प्रश्न

१ केन कारणेन स्वभावा एव परीक्ष्यन्ते । धर्मशास्त्रपठनात् किं महीयः। शीलाद्विभ्रंशो यदि न भवेत्तर्हि नरः किं किं स्वीकुर्यात् । केन कारणेन हंसः कूपोदकं न सेवते ।

२ समास सोडवून विग्रह करा :— अनशनतृपातैः, तृणपिहितकूपः, कुस्त्री वाक्संयमः, अक्रोधः, कूपोदकम्.

३ मूर्धन्, गो, श्रुतवत् हे शब्द चालवा :—

पाठ करा :—(१) शीलं स्वभावे सद्वृत्ते ।

(२) अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ।

(३) उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।

---

# पाठ १४

## भोजव्याधिनिरासः ।

एकदा राज्ञो भोजस्य कपाले वेदना जाता। ततस्तत्रत्यैर्भिषग्वरैः सम्यक् चिकित्सितापि न शान्ता । एवमतीते संवत्सरेऽपि न केनापि निवारितः स गदः । ततः श्रीभोजो रोगदुःखितमनाः समीपस्थं शोकसागरनिमग्नं बुद्धिसागरं कथमपि संयताक्षरमुवाच वाचम् । बुद्धिसागर, इतःपरमस्मद्विषये न कोऽपि भिषग्वरो वसतिमातनोतु । वाग्भटादिभेषजकोशान् निखिलान्स्रोतसि निरस्यागच्छ । मम देवसमागमसमयः समायात इति । तच्छ्रुत्वा सर्वेऽपि पौरजनाः कवयश्चावरोधसमाजाश्च विगलदस्रासारनयना बभूवुः । ततः कदाचिद्देवसभायां पुरन्दरः सकलमुनिवृन्दमध्यस्थं वीणामुनिमाह । मुने, इदानीं भूलोके का नाम वार्तेति । ततो नारदः प्राह । सुरनाथ, न किमप्याश्चर्यं किन्तु धारानगरवासी श्रीभोजभूपालो रोगपीडितो नितरामस्वस्थो वर्तते । स तस्य रोगो न केनापि निवारितः । तदनेन भोजनृपालेन भिषग्वरा अपि स्वदेशान्निष्कासिता वैद्यशास्त्रमप्यनृतमिति निरस्तम् । एतदाकर्ण्य पुरुहूतः समीपस्था अश्विनीकुमाराविदमाह । भोः स्ववैद्यौ कथमनृतं धन्वन्तरीयं शास्त्रम् । तदा तावाहतुः । अमरेश, देव, न व्यलीकमिदं शास्त्रं किन्त्वमरविदितेन रोगेण बाध्यतेऽसौ भोज इति । इन्द्रः प्रपच्छ कोऽसाववार्यरोगः । किं भवतोर्विदितः । ततस्तावूचतुः । देव ज्ञायतेऽयं रोगः सम्यगावाभ्यामिति । तदेन्द्रः स्मयमानमुखः प्राह । तदिदानीं युवाभ्यां

गन्तव्यं न चेदितः परं भूलोके भिषक्शास्त्रस्यासिद्धिर्भवेत्। स खलु सरस्वतीविलासस्य निकेतनं शास्त्राणामुद्धर्ता चेति। ततः सुरेन्द्रादेशेन तावुभावपि धृतद्विजन्मवेषौ धारानगरं प्राप्य द्वारस्थं प्राहतुः। द्वारस्थ आवां भिषजौ काशीदेशादागतौ श्रीभोजाय विज्ञापय। तेनानृतमित्यङ्गीकृतं वैद्यशास्त्रमिति श्रुत्वा तत्प्रतिष्ठापनाय तद्रोगनिवारणाय चावां सम्प्राप्तौ। ततो द्वारस्थः प्राह भो विप्रौ न कोऽपि भिषग्वरः प्रवेष्टव्य इति राज्ञोक्तम्। राजा तु केवलमस्वस्थो नायमवसरो विज्ञापनस्येति। तस्मिन्क्षणे कार्यवशाद्बहिर्निर्गतो बुद्धिसागरस्तौ दृष्ट्वा कौ भवन्तावित्यपृच्छत्। ततस्तौ यथापूर्वमूचतुः। ततो बुद्धिसागरेण तौ राज्ञः समीपं नीतौ। ततो राजा ताववलोक्य मुखश्रियाऽमानुषाविति बुद्ध्वाऽऽभ्यां शक्यतेऽयं रोगो निवारयितुमिति निश्चित्य तौ बहु मानितवान्। ततस्तावूचतुः। राजन् न भेतव्यं रोगो निर्गतः। किन्तु कुत्रचिदेकान्ते त्वया भवितव्यमिति। ततः राज्ञापि तथा कृतम्। अश्विनीकुमाराभ्यां तस्य व्याधिर्नीरोगतां नीतः।

भोजप्रबन्धः।

---

### टीपा

चिकित्सिता—'कित् १ प. प. बरें करणें' धातूचें क. भू. धा. वि. इच्छार्थकासारखें रूप पण अर्थ साधाच.

विगलदस्रासारनयन.—विगलन् अस्राणाम् आसारः ययोः ते विगलदस्रासारे; विगलदस्रासारे नयने यस्य स.।

नीरोगतां नी—बरें करणें

---

### प्रश्न

१ रोगार्तः नृपः बुद्धिसागराय किम् अकथयत्। इन्द्रः नारदं किम् आह। नारदेन किं कथितम्। तच्छ्रुत्वा इन्द्रेण कौ पृथ्वीं प्रेषितौ।

२ या गोष्टीतील सर्व भूतकालवाचक धातु. विशेषणांबद्दल त्या त्या धातूंचीं प्रथमभूत किंवा द्वितीयभूतकाळी रूपें योजा.

३ शोकसागरनिमग्नः, भिषग्वरः, धृतद्विजन्मवेषौ, द्वारस्थः, यथापूर्वम्—या समासांचा विग्रह करून नांवें सांगा.

४ 'तोंडावर हास्य असलेला, भिऊं नको, आमच्या देशांत, स्त्रीसमाज, फार मान दिला' या अर्थाचे गोष्टीतील शब्द लिहा.

पाठ कराः—(१) रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।

(२) इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः

वृद्धश्रवाः सुनाशीरः पुरुहूतः पुरन्दरः ॥

---

# पाठ १५

## स्वर्गलोकादर्जुनस्य भुवं प्रत्यागमनम्

[ व्यासांच्या उपदेशाप्रमाणें शंकर, इन्द्र वगैरे देवांकडून अस्त्रें मिळवून इन्द्राच्या रथांतून इन्द्राचा सारथि मातलि याजबरोबर अर्जुन परत आला. त्या प्रसंगाचें वर्णन या श्लोकांत आहे.]

ततः कदाचिद्धरिसम्प्रयुक्तं महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिन्तयतां बभूव ॥ १ ॥
स दीप्यमानः सहसाऽन्तरिक्षं प्रकाशयन्मातलिसङ्गृहीतः ।
बभौ महोल्केव घनान्तरस्था शिखेव चाग्नेर्ज्वलिता विधूमा ॥ २ ॥
तमास्थितः सन्ददृशे किरिटी स्रग्वी नवान्याभरणानि बिभ्रत् ।
धनञ्जयो वज्रधरप्रभावः श्रिया ज्वलन्पर्वतमाजगाम ॥ ३ ॥
स शैलमासाद्य किरीटमाली महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्वमजातशत्रोस्तदनन्तरं च ॥ ४ ॥
वृकोदरस्यापि च वन्द्य पादौ माद्रीसुताभ्याममिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां प्रह्वोऽभवद् भ्रातुरुपह्वरे सः ॥ ५ ॥

बभूव तेषां परमः प्रहर्षस्तेनाप्रमेयेण समेत्य तत्र ।
स चापि तान्प्रेक्ष्य किरीटमाली ननन्द राजानमभिप्रशंसन् ॥ ६ ॥
ते मातलेश्चक्रुरतीव हृष्टाः सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसङ्घं पप्रच्छुरेनं कुरुराजपुत्राः ॥ ७ ॥
तानप्यसौ मातलिरभ्यनन्दत् पितेव पुत्राननुशिष्य पार्थान् ।
ययौ रथेनाप्रतिमप्रभेण पुनः सकाशं त्रिदिवेश्वरस्य ॥ ८ ॥
गते तु तस्मिन्वरदेववाहे शक्रात्मजः सर्वरिपुप्रमाथी ।
साक्षात्सहस्राक्ष इव प्रतीतः श्रीमान्स्वदेहादवमुच्य जिष्णुः ॥ ९ ॥
शक्रेण दत्तानि ददौ महात्मा महाधनान्युत्तमरूपवन्ति ।
दिवाकराभाणि विभूषणानि पीतः प्रियायै सुतसोममात्रे ॥ १० ॥
ततः स तेषां कुरुपुङ्गवानां तेषां च सर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये सर्वं यथावत्कथयांबभूव ॥ ११ ॥
संक्षेपतो वै स विशुद्धकर्मा तेभ्यः समाख्याय दिवः प्रवेशम् ।
माद्रीसुताभ्यां सहितः किरीटी सुष्वाप तामावसतिं प्रतीतः ॥ १२ ॥

महाभारतम् ।

---

टीपा

वन्द्य—वन्दित्वा या अर्थीं अनियमित रूप.
सुतसोममाता—द्रौपदी भीम व द्रौपदी यांच्या मुलाचें नाव सुतसोम होतें.
९ प्रतीत—भामला. १२ प्रतीत—हृष्टः, आनन्दित. ।

---

प्रश्न

१ या श्लोकांचा सारांश संस्कृतमध्यें गद्यरूपानें लिहा.

२ अर्जुनाला कोणकोणत्या उपमा दिल्या आहेत तें सांगून त्यांचा अर्थ स्पष्ट करा.

३ अर्जुनाला लावलेलीं विशेषणें सांगून तीं कशीं योग्य आहेत हें दाखवा.

४ 'विजेसारखें तेज असलेली, धूर नसलेली, इन्द्राच्या तोडीचा, हजार डोळ्यांचा, सूर्यासारखें तेज असलेला' या अर्थाचे वरील उताऱ्यांतील समास सांगून त्यांचा विग्रह करा व नांवें सांगा.'

५ या वर्णनांतील कोणता श्लोक तुम्हांला आवडतो हें सकारण सांगा.

पाठ कराः—जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
आखण्डलः सहस्राक्ष ऋभुक्षा मेघवाहनः ॥

---

# पाठ १६

## मूर्खपण्डितानाम् ।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । बालभावे तेषां मतिरजायत । भो देशान्तरं गत्वा विद्याया उपार्जनं क्रियते । अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दानि यावदेकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः । ततस्तैश्चतुर्भिर्मिलित्वोक्तम् । वयं सर्वे विद्यापारे गताः । तदुपाध्याय-मुत्कलापयित्वा स्वदेशे गच्छामः । तथैव क्रियतामित्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः । यावत्कञ्चिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ । उपविष्टाः सर्वे ।

तत्रैकः प्रोवाच । केन मार्गेण गच्छामः । एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः । तस्य दाहार्थे महाजनो गतोऽभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम् । 'महाजनो येन गतः स पन्थाः' इति तन्महाजनमार्गेण गच्छामः । अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम् ।

'आतुरे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः' ॥

तदहो अयमस्मदीयो बान्धवः । ततः कश्चित्तस्य ग्रीवायां लगति । कोऽपि पादौ प्रक्षालयति । अथ यावद्दिशामवलोकनं ते पण्डिताः कुर्वन्ति तावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम् । एतत्किम् । तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम् 'धर्मस्य त्वरिता गतिः' । एष धर्मस्तावत् चतुर्थेनोक्तम् 'इष्टं धर्मेण योजयेत्'। अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। केनचिद्रजकस्याग्रे कथितम् । यावद्रजकस्तेषां मूर्खपण्डितानां प्रहार-करणाय समायातस्तावत्ते प्रनष्टाः । यावदग्रे किञ्चित्स्तोकं मार्गं यान्ति तावत् काचिन्नद्यासादिता । तत्तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम् । 'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति' । एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमान-मवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम् ।

'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा

कश्चिद् ग्राम आसादितः। तेऽपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः। तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। ततो विचिन्त्य पण्डितेनोक्तम्। यद्दीर्घसूत्री विनश्यति। एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डका दत्ताः। तेनाप्युक्तम्। अतिविस्तरविस्तीर्णं न तद्भवेच्चिरायुषम्। स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिकाभोजनं दत्तम्। तत्रापि पण्डितेनोक्तम् 'छिद्रेष्वनर्था बहुलीभवन्ति' एवं तेऽपि त्रयः पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात्स्वदेशं गताः। साध्विदं खलूच्यते।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः॥

पञ्चतंत्रम्।

---

## टीपा

'कान्यकुब्जे गताः'—गम् धातूचा उपयोग स्थलवाचक शब्दाचीं द्वितीया योजून करतात. सप्तमी अपवाद समजावी. अशी उदाहरणें या पाठांत वरीच आहेत.

'द्वादशाब्दानि यावत्'—बारा वर्षेपर्यंत. 'यावत्' या अव्ययाचा उपयोग 'पर्यंत' या अर्थी कालवाचक शब्दाची द्वितीया योजून करतात. 'उत्कलापयित्वा—निरोप घेऊन' 'उत्कलाप' या विशेषणाच्या नामधातूचें पूर्व. धा. अव्यय.

'इष्ट—मित्र'

'चिरायुषम्'—हें रूप बरोबर नाही. तें 'चिरायु' असें पाहिजे.

## प्रश्न

१ वाक्यें पुरीं कराः—रासभ आत्मनो मित्रमिति तैश्चिन्तितम् यतः......। उष्ट्रो रासभग्रीवायां तैर्बद्धः यतः......। नद्या नीयमानस्य शीर्षमन्येन पण्डितेन छिन्नं यतः......। ते सूत्रिकामण्डकावटिकाभोजनं त्यक्तवन्तो यतः......।

२ तेषां मतिरजायत। पण्डितैरुष्ट्रो दृष्टः। पत्रमस्मांस्तारयिष्यति। या तीन वाक्यांत 'मतम्, अपश्यन् आणि वयम्' असे शब्द अनुक्रमें योजून तीं पुन्हा योग्य तऱ्हेनें बदलून लिहा.

३ देशान्तरम्, विद्याकुशलाः, शिरश्छेदः, क्षुत्क्षामकण्ठाः, विद्योपार्जनम्—हे समास सोडवून त्यांची नांवें सांगा.

४ 'अन्यस्मिन् दिवसे, दिशामवलोकनम्, मित्रत्वमापन्नाः, पुस्तकैः सहिताः, द्वादशाब्दानि' या शब्दसमुच्चयांबद्दल सामासिक शब्द योजा.

पाठ कराः—प्रवीणनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि॥

---

# पाठ १७

## गुणप्रशंसा।



गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम्।
केतकीगन्धमाघ्राय स्वयमायान्ति षट्पदाः॥ १॥
गुणवज्जनसम्पर्काद्याति स्वल्पोऽपि गौरवम्।
पुष्पाणामनुषङ्गेण सूत्रं शिरसि धार्यते॥ २॥
गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः।
वासुदेवं नमस्यन्ति वसुदेवं न मानवाः॥ ३॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
न हि कस्तूरिकामोदः शपथेन निवार्यते॥ ४॥
गुणवन्तः क्लिश्यन्ते प्रायेण भवन्ति निर्गुणाः सुखिनः।
बन्धनमायान्ति शुका यथेष्टसञ्चारिणः काकाः॥ ५॥

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न दर्दुरस्त्वेकवासोऽपि ॥ ६ ॥

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयाः प्रवहन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥७॥

गुणेषु यत्नः पुरुषेण कार्यो न किञ्चिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ८ ॥

सुभाषितानि ।

---

### टीपा

'नमस्यन्ति'—नमस्कार करतात. 'नमस्' पासून नामधातु.
'प्रायः—प्रायेण—बहुधा' यांचा उपयोग सामान्य सिद्धान्त सांगताना करतात.

---

### प्रश्न

१ गुणाचें महत्त्व दाखविण्याकरितां कोणकोणतीं उदाहरणें घेतलीं आहेत हें दर्शवून त्यांचें स्पष्टीकरण करा.

२ सुस्वादुतोयाः, गुणज्ञः, अपेयाः, एकवासः व निर्गुणाः हे समास सोडवून त्यांचीं नांवें सांगा.

३ निवार्यते, अप्राप्यतमम्, आसाद्य, आघ्राय व वसताम् हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

४ शुक–काक, अलि–दर्दुर, वासुदेव–वसुदेव या जोड्यांचा सुभाषितकारानें कोणत्या हेतूनें उपयोग केला आहे ?

पाठ कराः—( १ ) मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ॥
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥
( २ ) भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

---

# पाठ १८

## कर्तव्यं सुपरीक्षितम् ।



अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकामकार्याणि कुर्वतो विधिवशाद्धनक्षयः सञ्जातः । ततो विभवक्षयादपमानपरम्परया परं विषादं गतः । रात्रौ सुप्तश्चिन्तितवान् । यदहमनशनं कृत्वा प्राणानुत्सृजामि । किमनेन व्यर्थजीवितव्यसनेन । एवं निश्चयं कृत्वा सुप्तः । अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपी दर्शनं गत्वा प्रोवाच । भोः श्रेष्ठिन् मा त्वं वैराग्यं गच्छ । अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः । तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि । तत्त्वयाहं लकुटप्रहारेण शिरसि ताडनीयो येन कनकमयो भूत्वाक्षयो भवामि । अथ प्रातः प्रबुद्धः सन्स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति । अहो सत्योऽयं स्वप्नः किंवासत्यो भविष्यति न ज्ञायते । अथवा नूनं मिथ्या भाव्यं यतोऽहं केवलं वित्तमेव चिन्तयामि । उक्तं च ।

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना ।
कामार्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः ।

एतस्मिन्नन्तरे तत्र प्राप्तः कश्चिन्नापितो यथासमयम् । अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव । अथ स श्रेष्ठी तमालोक्य प्रहृष्टमना यथासन्नकाष्ठदण्डेन तं शिरस्यताडयत् । सोऽपि सुवर्णमयो भूत्वा तत्क्षणाद्भूमौ निपतितः । अथ तं स श्रेष्ठी निभृतं स्वगृहमध्ये

कृत्वा नापितं सन्तोष्य प्रोवाच । यदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण । भद्र पुनः कस्यचिन्नाख्येयो वृत्तान्तः । नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत् । नूनमेते सर्वेऽपि नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति । तदहमपि प्रातः प्रभूतानाहूय लकुटैः शिरसि हन्मि येन प्रभूतं हाटकं मे भवति । एवं चिन्तयतो महता कष्टेन निशातिचक्राम । अथ प्रभातेऽभ्युत्थाय बृहल्लकुटमेकं प्रगुणीकृत्य क्षपणकविहारं गत्वा जिनेन्द्रस्य प्रदक्षिणात्रयं विधाय जानुभ्यामवनिं गत्वा तारस्वरेणेमं श्लोकमपठत् ।

सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम् ।
तावेव करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥

एवं संस्तुत्य ततः प्रधानक्षपणकमासाद्य क्षितिनिहितजानुचरणो नमोऽस्तु वन्द इत्युच्चार्य लब्धधर्मवृद्ध्याशीर्वादः सुखमालिकानुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः सप्रश्रयमिदमाह । भगवन्नद्य विहरणक्रिया समस्तमुनिसमेतेनास्मद्गृहे कर्तव्या । साम्प्रतं पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि प्रगुणीकृतानि तथा पुस्तकानां लेखनाय लेखकानां च वित्तं दत्तमास्ते । तत्सर्वथा कालोचितं कार्यम् । इत्युक्त्वा नापितो गृहं गतः । तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान्परित्यज्य प्रहृष्टमनसस्तस्य गृहं ययुः । तान्गृहमध्ये प्रवेश्य द्वारं निभृतं विधाय स लकुटप्रहारैः शिरस्यताडयत् । तेऽपि ताड्यमाना एके मृता अन्ये भिन्नमस्तकाः फूत्कर्तुमुपचक्रमिरे । अत्रान्तरे तमाक्रन्दमाकर्ण्य कोटरक्षपालैरभिहितम् । भो भोः किमयं महान्कोलाहलो नगरमध्ये । तद्गम्यतां गम्यताम् । ते च सर्वे तदादेश-

कारिणस्तत्सहिता वेगात्तद्गृहं गताः । तावद् रुधिरप्लावितदेहाः पलायमाना नग्नका दृष्टाः । तैः स नापितो बद्धः । हतशेषैः सह धर्माधिष्ठानं नीतः । तैर्नापितः पृष्टः । भोः किमेतद्भवता कुकृत्यमनुष्ठितम् । स आह । किं करोमि । मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः । सोऽपि सर्वं मणिभद्रवृत्तान्तं यथादृष्टमकथयत् । ततः श्रेष्ठिनमाहूय भणितवन्तः । भोः श्रेष्ठिन् किं त्वया कोऽपि क्षपणको व्यापादितः । ततस्तेनापि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः । अथ तैरभिहितम् ।

अहो शूलमारोप्यतामसौ दुष्टात्मा कुपरीक्षितकारी नापितः । तथानुष्ठिते तैरभिहितम् ।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥

पञ्चतन्त्रम् ।

---

## टीपा

'किम्—काय उपयोग' याचा उपयोग उपयुक्त वस्तुवाचक शब्दाची तृतीया योजून व योजणारा या अर्थाच्या शब्दाची षष्ठी योजून करतात.

'जानुभ्याम् अवनिं गम्'—गुडघे टेकणें.

'प्रगुणीकृ'—व्यवस्थित करणें, नीट ठेवणें, सरळ करणें.

'वित्तं दत्तमास्ते'—द्रव्य एकसारखें दिलें जात आहे.

पद्मानिधिः—'पद्म' संख्येइतकें द्रव्य '१,०,०,०,००,००,००,०००.' कुबेराच्या नऊ निधींतील एक निधि.

---

## प्रश्न

१ 'कर्तव्यम् सुपरीक्षितम्' हा उपदेश करणारी. दुसरी एकादी गोष्ट संस्कृतमध्यें लिहा.

२ चिन्तितवान्, सन्तोष्य, अभिहितम्, भणितवन्तः, पलायमानाः, आरोप्यताम्, ताड्यमाना—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

३ (१) त्वया क्षपणको व्यापादितः। (२) तैर्नापितो बद्धः। (३) स तान् शिरस्यताडयत्। (४) स नापितो रक्षपालैर्धर्माधिष्ठानं नीतः। या वाक्यांतील क्रियापदें व कर्मणि भू. धा. विशेषणें यांबद्दल योग्य तीं परोक्षभूतकाळी रूपें योजा व पुन्हां तीच वाक्यें प्रयोग बदलून लिहा.

४ अनशनम्, चिन्ताचक्रम्, यथासमयम्, दण्डहताः, बृहल्लकुटम्—हे समास सोडवून त्यांची नांवें सांगा.

पाठ करा:—स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।
तपनीयं शातकौम्भं गाङ्गेयं भर्म कर्बुरम्॥
चामीकरं जातरूपं महारजतकाञ्चने।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्॥

---

# पाठ १९

## भगवतो विश्वरूपवर्णनम्।

[ श्रीकृष्णानी अर्जुनाला आपलें विश्वरूप दाखविलें. त्या वेळी अर्जुनानें केलेलें वर्णन या श्लोकात आहे. ]

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान्।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान्॥ १॥

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम्॥ २॥

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ ३ ॥
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ ४ ॥
अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाःस्तुवन्ति त्वां स्तुतिभिःपुष्कलाभिः॥५॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ ६ ॥
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥७॥
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ ८ ॥
यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥९॥
लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥१०॥
स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥११॥
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥१२॥

### टीपा

लेलिह्यसे—लिह् धातूचें पौन पुन्यार्थकाचें वर्त. द्वि. पु. ए. वचन.

अभिविज्वलन्ति (वक्त्राणि)—सर्व बाजूंनी पेटणारी तोंडें. अभि + वि + ज्वल् या धातूचें वर्त. धातु. विशेषण; न. द्वितीया बहुवचन.

स्थाने—या शब्दाचा अव्ययार्थी उपयोग 'योग्य आहे' या अर्थी करतात.

---

### प्रश्न

१ अर्जुनानें केलेलें पद्यमय वर्णन गद्यात लिहा.

२ अनेकबाहूदरवक्त्रनेत्रम्, द्यावापृथिव्यौ, प्राञ्जलयः, चराचरः, त्वत्समः, अप्रतिमप्रभावः—या समासाचे विग्रह करून नावें सांगा.

३ दुर्निरीक्ष्यम्, ग्रसमानः, नमस्यन्ति, आपूर्य, गरीयान्—हीं रूपें ओळखा.

४ वरील श्लोकांतील १–२ उत्तम कल्पना सांगून त्यांचें स्पष्टीकरण करा.

पाठ कराः—देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥

---

# पाठ २०

## जरासन्धजन्मकथा ।

आसीत्पुरा तिसृणामक्षौहिणीनां पतिर्मगधाधिपतिर्बली राजा बृहद्रथो नाम । स तेजसा सूर्यसङ्काशः क्षमया पृथिवीसमः क्रोधेऽन्तकसमः श्रिया च वैश्रवणोपम आसीत् । महावीर्यः स काशिराजस्य यमजे रूपद्रविणसमिते सुते उपयेमे । स राजा ताभ्यां तथा रराज यथानुरूपाभ्यां करेणुभ्यां द्विपः । अतीते यौवनेऽपि न तस्यापत्यलाभो जातः। अतो भार्याभ्यां सहितः स भृशं निर्वेदमगमत् । अतः प्रकृतिभिर्वार्य-

माणोऽपि राज्यं परित्यज्याश्रयत्तपोवनम् । तत्रागतं महात्मनो गौतमस्य पुत्रं चण्डकौशिकं सर्वयत्नैरतोषयत् । किमर्थं सपत्नीकस्य तवात्रागमनमिति तेन पृष्टो राजावादीत् । भगवन् वंशकरः पुत्रो मे नास्त्यतोऽपुत्रस्य मे वृद्धत्वे राज्येन किं प्रयोजनम् । अत एवाहं वने पत्नीभ्यां सह तप आचरिष्यामीति । राज्ञैवमुक्तः कारुण्यमुपगतः स मुनिमत्तमस्तमब्रवीत् । परितुष्टोऽस्मि राजेन्द्र वरं वरयेति । ततः सभार्यो बृहद्रथस्तं प्रणम्य बाष्पसन्दिग्धया गिरा प्रोवाच ।

भगवन् राज्यमुत्सृज्य प्रस्थितस्य तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ इति ।

एतच्छ्रुत्वा क्षुभितेन्द्रियो मुनिर्ध्यानमगमत्तत्रैवाम्रवृक्षस्य छायायां समुपाविशत् । तत्रोपविष्टस्य तस्योत्सङ्गे किमप्याम्रफलं पतितम् । तत्प्रगृह्य हृदयेनाभिमन्त्र्य पुत्रसम्प्राप्तिकारणं तत्फलं राज्ञे दत्त्वोवाच । राजन् तव सुतप्राप्तिरचिराद्भविष्यति । कृतकृत्यस्त्वं निवर्तस्व स्वराज्यमिति ।

एवमृषिणानुज्ञातः पत्नीभ्यां सहितो नृपः पौरैरनुगतः स्वपुरं विवेश । पश्चात्स तत्फलं पत्नीभ्यां ददौ । ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः । मुनेः सत्यवाक्यतया तयोः फलप्राशनसम्भवो गर्भः समभवत् । तदवस्थे ते दृष्ट्वा नृपतिः परां मुदमवाप । अथ यथासमयमागते काले तयोरुभे शरीरशकले प्राजायेताम् । तद् दृष्ट्वा ते उभे उद्विग्ने प्रवेपतुः सजीवे च प्राणिशकले तत्यजतुः । तयोर्धात्र्यौ ते शकले सुसंवीते कृत्वा चतुष्पथे जहतुः । किन्तु तत्र प्रासया जरया नाम राक्षस्या चतुष्पथनिक्षिप्ते शकले यदैकीकृते तदैकमूर्तिधरो वीरः कुमारः समपद्यत । तं दृष्ट्वा सा राक्षस्यचिन्तयत् ।

नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः ।
बालं पुत्रमिमं हन्तुं धार्मिकस्य महात्मनः ॥ इति ॥

अतः सा मानुषरूपं भूत्वा वसुधाधिपं गत्वोवाच । हे बृहद्रथ एष ते सुतः प्रगृह्यताम् । द्विजातिवरशासनात् पत्नीद्वये जातो धात्रीजनपरित्यक्तोऽयं मया परिरक्षित इति । नृपस्तु कुमारं गृहीत्वा गृहं प्रविवेश । जरया सन्धितो यस्माज्जरासन्धो भवत्वयमित्युक्त्वा तस्य जरासन्ध इति नाम चकार ।

महाभारतम् ।

---

टीपा

उप – यम् ( १–आ. प. )—विवाह करणें.

' किं प्रयोजनम्'—काय उपयोग याचा उपयोग करताना उपयुक्त वस्तुवाचक शब्द तृतीयेंत योजतात व उपयोग करणारा या अर्थाच्या शब्दाची षष्ठी योजतात.

पुत्रगृद्धिन्—मुलाची तीव्र इच्छा धरणारा.

---

प्रश्न

१ वाक्यें पुरी करा—( १ ) सभार्यो बृहद्रथो निर्वेदमगच्छत् यतः.........
( २ ) स राज्यमत्यजत् यतः.........( ३ ) फलभक्षणाद्भार्ययोर्गर्भः समभवत् यतः..... ... ( ४ ) उभे शकले तयोः प्राजायेताम् यतः...........

२ वैश्रवणोपमः, सपत्नीकः, बाष्पसन्दिग्धा, सभार्यः, अल्पभाग्यः, अप्रजः, हे समास सोडवून त्यांचीं नांवें सांगा.

३ या उताऱ्यांतील परोक्ष भूतकाळाच्या रूपांबद्दल प्र. भूतकाळी रूपें योजा व प्र भूतकाळी रूपांबद्दल परोक्षभूतकाळी रूपें योजा.

४ सम, दा, सह, प्र + जन्, किम्–यांचा संस्कृत वाक्यांत उपयोग करा.

पाठ करा:—भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥
सर्वसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥

---

# पाठ २१

## दिलीपवर्णनम्।

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ १ ॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इव राजेन्दुरिन्दुः क्षीरनिधाविव ॥ २ ॥

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ ३ ॥

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ ४ ॥

रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ ५ ॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ ६ ॥

सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ ७ ॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ ८ ॥

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ ९ ॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ १० ॥
स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ११ ॥
तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ १२ ॥
कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ १३ ॥

रघुवंशम् ।

---

## टीपा

'वैवस्वतः'—हें सातव्या मनूचें नांव.

'प्रणवश्छन्दसामिव'—ज्याप्रमाणें सर्व वेदांतील ऋचाच्या आरंभीं 'ओम्' हा शब्द असतो त्याप्रमाणें.

'अन्वभूत्'—'अनु + भू' या धातूचें तृतीयभूतकाळी तृ. पु. ए. वचनी रूप. तसेंच 'अग्रहीत्' 'ग्रह्' पासून तृ. भू तृ. पु. ए. व. रूप.

---

## प्रश्न

१ दिलीप राजाचें वर्णन संस्कृतमध्यें गद्यरूपांत करा.

२ मनुः, दिलीपः, प्रणवः, उर्वी, इन्दुः, सुदक्षिणा, एकपुरी, दक्षिणा—या शब्दांतील उपमेयवाचक व उपमानवाचक शब्द यांच्या योग्य जोडया लावा.

३ ७, ८ व १० या श्लोकांचा अर्थ स्पष्ट करा.

४ वृषस्कन्धः, शालप्रांशुः, सेनापरिच्छदः, अनन्यशासना, नेमिवृत्तयः—हे समास सोडवून नांवें सांगा.

पाठ करा:—ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥

---

# पाठ २२

## पितरौ नावमन्येत ।



धवलाख्ये पुरे चक्रो नाम वणिक्पुत्रोऽनिच्छतोरपि पित्रोर्वणिज्यया स्वर्णद्वीपमगात् । तत्र पञ्च वर्षाण्युषित्वा महाधनं चार्जयित्वा स्वपुरं निवर्तितुमियेष । अतः सोऽब्धौ रत्नपरितं वहनमारुरोह । अल्पावशेषे गन्तव्ये वारिधौ महावातवर्षवेगाकुलोऽम्बुद उन्नदन्नुदतिष्ठत् । समुद्रे समुद्भूता महोर्मयः पितरावयमन्यैष किमायात इति विचारयन्त्य इव क्रोधात्तत्प्रवहणं निर्बभञ्जुः । तत्स्थाः केऽपि तोयैर्हृताः केचिच्च मकरैर्भक्षिताः । किन्तु चक्र आयुःशेषतया वीचिभिर्बलान्नीत्वा तीरे क्षिप्तः । तत्रस्थः स रौद्रासिताकृतिना पाशहस्तेन केनापि पुरुषेणोत्क्षिप्य पाशवेष्टितो नीतो लोहमये च गेहे निवेशितः । तत्र स चक्रो मूर्ध्नि भ्रमता तप्तेन लौहेन चक्रेण पीड्यमानं कमपि पुरुषमीक्षांचक्रे । तं दृष्ट्वा चक्रस्तं पप्रच्छ कस्त्वं केनाशुभेनैवं जीवसीति । स पुरुषः प्रत्युवाच ।

खड्गाख्योऽहं वणिक्पुत्रः पित्रोर्यच्च वचो मया ।
न कृतं तेन सङ्क्रुद्धौ तौ मामशपतां क्रुधा ॥
शिरःस्थायससन्तप्तचक्राभो नौ दुनोषि यत् ।
तदीदृश्येव ते पीडा दुराचार भविष्यति ॥
इत्युक्त्वा तौ विरम्योभौ रुदन्तं मामवोचताम् ।
मा रोदीरेकमेवास्तु मासं पीडा तवेदृशी ॥

एतच्छ्रुत्वा निश्यहं स्वप्ने भीमं पुरुषं दृष्टवान् । तेन बलेनादायाहमस्मिँल्लोहमये गृहे क्षिप्तो न्यस्तं च मे मूर्ध्नि ज्वलच्चक्रमिदं भ्रमत् । स च

मासोऽद्य सम्पूर्णस्तथाप्यहं न मुच्य इति । तस्य तद्वचनं श्रुत्वा सकृप-श्चक्रोऽब्रवीत् । अर्थार्थं प्रवसता मयापि पित्रोर्वचनं न कृतम् । अतः प्राप्तं तव वित्तं नङ्क्ष्यतीति तावशपताम् । अतो यथाशापं द्वीपान्तरार्जितं मम कृत्स्नं धनमब्धौ विनष्टम् । अतः कोऽर्थ एतादृशेन जीवितेन मे । देह्येतच्चक्रं मे मूर्ध्नि तव शापश्चापयात्विति । यावच्चक्र एवमवदत्तावद्दिव्या वाणी शुश्रुवे यद्धे खड्ग त्वं मुक्तोऽसि । चक्रस्य मूर्ध्नि चक्रमेतदर्पयेति । अतश्चक्रशिरसि न्यस्तचक्रः स खड्गः केनाप्यदृश्येन प्राणिना पितृगृहं नीतः । चक्रस्तु मूर्ध्नि भ्रमच्चक्रं धारयित्वावदत् ।

पापिनोऽन्येऽपि मुच्यन्तां पृथ्व्यां तत्पातकैरपि ।
आपापक्षयमेतन्मे चक्रं भ्राम्यतु मूर्धनि ॥ इति ।

तच्छ्रुत्वा नभःस्थिताः पुष्पवृष्टिमुचो देवाः परितुष्यैवमब्रुवन् । हे महा-सत्त्व अनया करुणया ते पापं शान्तं भवतु त्वं च गृहं व्रज तवाक्षय्यं वित्तं भविष्यतीति । देवैरुक्तमात्रेष्वेव शब्देषु तदायसं चक्रं क्वाप्यदर्शनतां गतम् । तस्मिन्नेव क्षणे कोऽपि विद्याधरकुमारकस्तुष्टेन्द्रप्रेषितं महार्घं रत्नसञ्चयं दत्त्वा तं चाङ्के कृत्वा धवलाभिधं नगरं तं प्रापयामास यथागतं च जगाम । एवमानन्दितबान्धवश्चक्रः पित्रोरन्तिकं प्राप्य धर्मापरिच्युतस्तत्र स्थितः ।

कथासरित्सागरः ।

---

टीपा

अगदत्–'गद्' धातूचें तृ. भू. काळी तृ. पु. ए. वचन.

'उक्तमात्रेषु एव शब्देषु'–शब्द उच्चारले नाहींत तोंच सति सप्तमीतील भूत. धातुसाधिताला एव किंवा मात्र आणि एव हे शब्द जोडले असतां वरील अर्थ दर्शविला जातो.

---

## प्रश्न

१ चक्रस्य धनं केन कारणेन नष्टम्। केन कारणेन खड्गस्य मूर्ध्नि चक्रमभ्रमत्। किमर्थं तच्चक्रं चक्रेणात्मनः शिरसि वाञ्छितम्। कथं चक्रस्य सङ्कटं निवारितम्।

२ या गोष्टींतील सति सप्तमी किंवा सनः षष्ठी यांचीं उदाहरणें दर्शवून त्यांच्या उपयोगाचें स्पष्टीकरण करा.

३ यथागतम्, पाशहस्तः, दुराचारः, सकृपः, न्यस्तचक्रः—यांचे विग्रह करून नांवें सांगा.

४ जसें लोह पासून लौह, अयस् पासून आयस, तशीं सुवर्ण, रजत व हेमन् या शब्दांपासून होणारीं विशेषणें लिहा.

पाठ कराः—(१) उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्।
(२) अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्।
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्॥

---

# पाठ २३

## रामस्य लङ्कां प्रति गमनम्।



स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते।
धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत्॥ १॥
इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः॥ २॥
प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात्।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः॥ ३॥

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधीः ॥ ४ ॥
तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ५ ॥
निर्वाप्य प्रियसन्देशैः सीतां रक्षवधोद्यतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६ ॥
प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ७ ॥
स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि सम्बाधवर्त्मभिः ॥ ८ ॥
निविष्टमुदधेः कूले तं प्रपेदे बिभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमादिश्य चोदितः ॥ ९ ॥
तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ १० ॥
स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ११ ॥
तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ १२ ॥

रघुवंशम् ।

---

टीपा

स —राम ।

'धातोः स्थान इवादेशम्'—धातूच्या ठिकाणीं जसें दुसरें बदली रूप यावें त्याप्रमाणें. जसें 'पा' या धातूचा आदेश 'पिब्' असा होतो.

'संसारमिव निर्मम'—निरहंकार मनुष्य जसा संसारापलीकडे जातो तसा.

---

## प्रश्न

१ या कवितेंतील उपमा सांगून त्यांचें स्पष्टीकरण करा.

२ चतुर्थीचे निरनिराळे उपयोग या उताऱ्यांत आलेले आहेत; त्यांचें स्पष्टीकरण करा.

३ १ रामः सुग्रीवं सिंहासने सन्न्यवेशयत् । २ स प्लवगैः सेतुं बन्धयामास । ३ सः वानरैः लङ्कां रोधयामास । ४ मारुती रामाय प्रत्यभिज्ञानरत्नमदर्शयत् । या प्रयोजक वाक्यांचा प्रयोग बदला व त्यांची मूळ वाक्यें लिहा.

४ विचिन्वता, उत्तीर्य, चेरुः, परीता, निर्वाप्य व प्रतस्थे हीं रुपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ कराः—कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशः समानार्था हि ते स्मृताः ॥

---

# पाठ २४

## वसन्तसेनागमननिवेदनम् ।



[ वसन्तसेनेनें चारुदत्ताकडे ठेव ठेवलेले दागिने चोरीला गेले. म्हणून परतफेड करण्याकरिता चारुदत्तानें आपल्या स्त्रीच्या गळ्यांतील रत्नहार पाठविला. तेव्हा चारुदत्ताला भेटण्याकरतां आपण येत आहों असा निरोप तिनें पाठवला. त्या वेळचा हा संवाद आहे. ]

**विदूषकः**—भो वयस्य, भणितं वसन्तसेनया—भण चारुदत्तम्—अद्य प्रदोषे मयात्रागन्तव्यम् इति । तत्तर्कयामि रत्नावल्याऽपरितुष्टापरं याचितुमागमिष्यति ।

**चारुदत्तः**—वयस्य, आगच्छतु । परितुष्टा यास्यति ।

**चेटः**—( प्रविश्य ) अवेत मानवाः

यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति पृष्ठचर्म ।
यथा यथा लगति शीतवातस्तथातथा वेपते मे हृदयम् ॥

वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् ।
गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा ॥

आज्ञप्तोऽस्म्यार्यया वसन्तसेनया—'कुम्भीलक, गच्छ त्वम् । ममागमनमार्यचारुदत्तस्य निवेदय' इति । तद्यावदार्यचारुदत्तस्य गेहं गच्छामि । एष चारुदत्तो वृक्षवाटिकायां तिष्ठति । एषोऽपि स दुष्टबटुकस्तद्यावदुपसर्पामि । कथमाच्छादितं द्वारं वृक्षवाटिकायाः । भवतु । एतस्य दुष्टबटुकस्य संज्ञां ददामि । ( इति लोष्टगुटिकाः क्षिपति )

**विदूषकः**—अये क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति ।

**चारुदत्तः**—आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं भवेत् ।

**विदूषकः**—दास्याःपुत्र दुष्ट पारावत, तिष्ठ तिष्ठ यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलमस्मात्प्रासादाद्भूमौ पातयिष्यामि ।

( इति दण्डकाष्ठमुद्यम्य धावति )

**चारुदत्तः**—( यज्ञोपवीत आकृष्य ) वयस्य, उपविश । किमनेन । तिष्ठतु दयितासहितस्तपस्वी पारावतः ।

**चेटः**—कथं पारावतं पश्यति । मां न पश्यति । भवतु । अपरया लोष्टगुटिकया पुनरपि ताडयिष्यामि ।

**विदूषकः**—( दिशोऽवलोक्य ) कथं कुम्भीलकः । तद्यावदुपसर्पामि । अरे कुम्भीलक प्रविश । स्वागतं ते ।

**चेटः**—( प्रविश्य ) आर्य, वन्दे ।

**विदूषकः**—अरे, कुत्र त्वमीदृशे दुर्दिनेऽन्धकार आगतः ।

चेटः—अरे, एषा सा ।

विदूषकः—का । एषा का ।

चेटः—एषा सा ।

विदूषकः—किमिदानीं दास्याःपुत्र, दुर्भिक्षकाले वृद्धरङ्क इवोर्ध्वकं श्वासायसे—'एषा सा सा' इति ।

चेटः—अरे, त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे—'का का' इति ।

विदूषकः—तत्कथय ।

चेटः—(स्वगतम्) भवतु । एवं भणिष्यामि । (प्रकाशम्) अरे, प्रश्नं ते दास्यामि ।

विदूषकः—अहं ते मस्तके पादं दास्यामि ।

चेटः—अरे, जानीहि तावत्, तेन हि । कस्मिन् काले चूता मुकुलिता भवन्ति ।

विदूषकः—अरे दास्याःपुत्र, ग्रीष्मे ।

चेटः—(सहासम्) अरे, नहि नहि ।

विदूषकः—(स्वगतम्) किमिदानीमत्र कथयिष्यामि । भवतु । चारुदत्तं गत्वा प्रक्ष्यामि । (प्रकाशम्) अरे, मुहूर्तकं तिष्ठ (चारुदत्तमुपसृत्य) भो वयस्य, प्रक्ष्यामि तावत् । कस्मिन् काले चूता मुकुलिता भवन्ति ।

चारुदत्तः—मूर्ख वसन्ते ।

विदूषकः—(चेटमुपगम्य) मूर्ख वसन्ते ।

चेटः—द्वितीयं ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामाणां का रक्षां करोति ।

विदूषकः—अरे, रथ्या ।

चेटः—( सहासम् ) अरे, नहि नहि ।

विदूषकः—भवतु । संशये पतितोऽस्मि । ( विचिन्त्य ) भवतु चारुदत्तं पुनरपि प्रक्ष्यामि । ( पुनर्निवृत्य चारुदत्तं तथैवोदाहरति )

चारुदत्तः—वयस्य, सेना ।

विदूषकः—( चेटमुपगम्य ) अरे दास्याः पुत्र, सेना ।

चेटः—अरे, द्वे अप्येकस्मिन्कृत्वा शीघ्रं भण ।

विदूषकः—सेनावसन्ते ।

चेटः—ननु परिवर्त्य भण ।

विदूषकः—( कायेन परिवृत्य ) सेनावसन्ते ।

चेटः—अरे मूर्ख वटुक, पदे परिवर्तय ।

विदूषकः—( पादौ परिवर्त्य ) सेनावसन्ते ।

चेटः—अरे मूर्ख, अक्षरपदे परिवर्तय ।

विदूषकः—( विचिन्त्य ) वसन्तसेना ।

चेटः—एषा साऽऽगता ।

विदूषकः—तद्यावच्चारुदत्तस्य निवेदयामि । ( उपसृत्य ) भो चारुदत्त, धनिकस्त आगतः ।

चारुदत्तः— कुतोऽस्मत्कुले धनिकः ।

विदूषकः—यदि कुले नास्ति, तद् द्वारेऽस्ति । एषा वसन्तसेना-ऽऽगता ।

चारुदत्तः—वयस्य, किं प्रतारयसि ।

विदूषकः—यदि मे वचने न प्रत्ययसे, तदिमं कुम्भीलकं पृच्छ। अरे कुम्भीलक, उपसर्प।

चेटः—आर्य, वन्दे।

चारुदत्तः—भद्र, स्वागतम्। कथय सत्यं प्राप्ता वसन्तसेना।

चेटः—एष साऽऽगता वसन्तसेना।

चारुदत्तः—( सहर्षम् ) भद्र, न कदाचित्प्रियवचनं निष्फलीकृतं मया। तद् गृह्यतां पारितोषिकम्। ( इत्युत्तरीयं प्रयच्छति )

चेटः—( गृहीत्वा प्रणम्य सपरितोषम् ) यावदार्याया निवेदयामि। ( इति निष्क्रान्तः )

मृच्छकटिकम्।

---

टीपा

दास्याःपुत्र—हा अपशब्द म्हणून योजतात.
ज्ञा, नि + विद् ( प्र. ) या धातूंचा उपयोग षष्ठीबरोबर केलेला आहे. तो अपशब्द समजावा.

---

प्रश्न

१ हा संवाद मुलांकडून पाठ करवून घ्यावा.

२ या संवादांतील हास्यरसपर वाक्यें सांगा.

३ चारुदत्ताचा मोठेपणा दर्शविणारी वाक्यें सांगा.

४ निष्फलीकृतम्, परिवर्त्य, आश्वासयसे, पातयिष्यामि, क्रीडद्भिः—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ करा:—( १ ) आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।
अमात्यगणिकागेहोपवने वृक्षवाटिका॥

( २ ) वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।
अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः॥

# पाठ २५

## अजविलापः ।

—:०:—

[अज राजाची स्त्री इन्दुमती मार्गेत असतांना आकाशातून तिच्या छातीवर फुलांची माळ पडल्यामुळें मरण पावली. त्यावेळच्या अज राजाच्या शोकाचें वर्णन पुढील उताऱ्यात आहे.]

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ १ ॥
विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ २ ॥
स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ३ ॥
अथ वा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ४ ॥
कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ५ ॥
मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥ ६ ॥
कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः ॥ ७ ॥
तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ८ ॥
शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ९ ॥

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥ १० ॥
कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमः ॥ ११ ॥
समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ १२ ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ १२ ॥

रघुवंशम् ।

---

## टीपा

'ननु-खरोखर'—जोर देण्याकरितां योजतात.

'बाष्पगद्गदम्'—बाष्पैः गद्गदं यथा स्यात् तथा—अश्रूंनी कंठ दाटून.

कृतपूर्वः—पूर्वं कृत (सुप् सुप् समास). ज्या वेळेला समासांतील पदांची रचना मूळच्या समासांप्रमाणें केलेली नसते त्या वेळेला त्या समासाला 'सुप्सुप्' समास असें म्हणतात.

द्वन्द्वचरः पतत्री—जोडीनें जाणारा पक्षी—चक्रवाक.

---

## प्रश्न

१ इन्दुमतीच्या मरणानंतर अज राजाच्या मनांत आलेले विचार स्वतःच्या शब्दांत लिहा.

२ या उताऱ्यांतील उत्तम कल्पना सांगून त्यांचें स्पष्टीकरण करा.

३ या उताऱ्यांतील सुभाषितें सांगून त्यांचा अर्थ सांगा.

४ क्षपिता, अपोहितुम्, विषहिष्यते, निपतन्ती व कृतवती—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ कराः—अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ॥

---

# पाठ २६

## पञ्चतन्त्रस्य प्रस्तावना ।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थिसार्थकल्पद्रुमः सकलकलापारङ्गतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः परमदुर्मेधसो वसुशक्तिरुग्रशक्तिरनेकशक्तिश्चेतिनामानो बभूवुः । अथ राजा ताञ्शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच भो ज्ञातमेतद्भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तदेतान्पश्यतो मे महदपि राज्यं न सौख्यमावहति । अथवा साध्विदमुच्यते ।

किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयतामिति । तत्रैकः सुमतिनामा प्राह । प्रभूतकालज्ञेयानि शब्दशास्त्राणि. तत्संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तं च यतः

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगतश्छात्रसंसदि लब्धकीर्तिः। तस्मै समर्पयत्वेतान्। स नूनं द्राक्प्रबुद्धान् करिष्यतीति। स राजा तच्छ्रुत्वा विष्णुशर्माणमाहूय प्रोवाच। भो भगवन् मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथानन्यसदृशान्विदधासि तथा कुरु। तदहं त्वां शासनशतेन योजयिष्यामि। अथ विष्णुशर्मा तं राजानमूचे। देव, श्रूयतां मे तथ्यवचनम्। नाहं विद्याविक्रयं शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि ततः स्वनामत्यागं करोमि। अथासौ राजा तां ब्राह्मणस्यासम्भाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्मणापि तानादाय तदर्थं पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले सम्प्रवृत्तम्। किं बहुना।

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन॥

पञ्चतन्त्रम्।

---

टीपा

दुर्मेधसः—दुष्टा मेधा येषां ते. मेधा व प्रजा या शब्दांपूर्वी सु व दुस् हे शब्द बहुव्रीहि समासांत असल्यास त्यांची रूपें समासाचे शेवटी मेधस् व प्रजस् अशी होतात.

'अर्थशास्त्रं प्रति—अर्थशास्त्रासंबंधी.' 'प्रति' या अव्ययाचा उपयोग द्वितियान्त नामाबरोबर करतात.

---

प्रश्न

१ राजा सचिवानाहूय किमवदत्। को राजपुत्राणां प्रबोधनार्थं योग्यः।

विष्णुशर्माणं राजा किमवदत्। किं प्रतिवचनं विष्णुशर्मणः। पञ्चतन्त्रकं भूतले कथं सम्प्रवृत्तम्।

२ या गोष्टींतील ५ तत्पुरुष व ५ बहुव्रीहि समास सांगा व त्यांचा विग्रह करा.

३ कोऽर्थः, यथा-तथा, अथ, समर्प्य, प्रभृति-यांचा संस्कृत वाक्यांत उपयोग करा.

४ पञ्चशती, चिन्त्यताम्, अपास्य, असम्भाव्या, अधीत्य-हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ करा :—इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः।
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः॥

---

# पाठ २७

## सन्तोषप्रशंसा।

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्॥ १॥
अकृत्वा परसन्तापमगत्वा खलनम्रताम्।
अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु॥ २॥
अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः।
सदा सन्तुष्टमनसः सर्वाः सुखमया दिशः॥ ३॥
सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम्॥ ४॥

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
  सम इह परितोषो निर्विशेषो विशेषः ।
स हि भवति दरिद्रो यस्य तृष्णा विशाला
  मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ ५ ॥
गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
  तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोजं गतः ।
बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः
  सन्तोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ ६ ॥

सुभाषितानि ।

---

### टीपा

क्षपयन्ति—'क्षि' धातूचें प्रयोजक रूप.
'सुखमयाः दिशः'—'सुखमय्य दिश' सुखमय याचें स्त्रीलिंगी रूप सुखमयी असें होतें.

---

### प्रश्न

१ मन सन्तुष्ट असल्यानें काय फायदा होतो ?
२ मधुकराच्या उदाहरणावरून कवीनें काय सिद्ध केले आहे ?
३ सन्तोषामृततृप्ताः, शान्तचेतसः, गन्धाढ्यां, सरोजम् व मन्दधीः—हे समास सोडवून नांवें सांगा.
४ 'सन्तोष एव पुरुषस्य परं निधानम्' हें सिद्ध करण्याकरितां कोणतीं उदाहरणें घेतलेली आहेत ?

पाठ कराः—( १ ) चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।
( २ ) गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।

---

# पाठ २८

## अवन्तीनाथस्तारापीडः ।

अस्ति सकलत्रिभुवनललामभूता विजितामरलोकद्युतिरवन्तीषूज्जयिनी-नाम नगरी । तत्र च भगवान्महाकालाभिधान उत्सृष्टकैलासवासप्रीतिः स्वयं निवसति । तस्यां नगर्यां नलभगीरथदशरथप्रतिमो भुजबलोपार्जित-मण्डलो मतिमानुत्साहसम्पन्नोऽधीतधर्मशास्त्रोऽवतार इव धर्मस्य परि-हृतप्रजापीडो राजा तारापीडो नामाभूत् । तस्य च राज्ञो नीतिशास्त्रप्रयोग-कुशलो महत्स्वपि कार्यसङ्कटेष्वविषण्णधीरमात्यो ब्राह्मणः शुकनासो नामासीत् । स राजा बाल एव सुरकुञ्जरकरपीवरेण बाहुना विजित्य सप्तद्वीपवलयां वसुन्धरां तस्मिञ्शुकनासनाम्नि मन्त्रिणि सुहृदीव राज्य-भारमारोप्य सुस्थिताः प्रजाः कृत्वा प्रायो यौवनसुखान्यनुबभूव । शुकनासोऽपि महान्तं तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार । यथैव राजा सर्वकार्याण्यकार्षीत्तद्वदसावपि द्विगुणीकृतप्रजानुरागश्चक्रे ।

एवं मन्त्रिनिवेशितराज्यभारस्य तस्य राज्ञो यौवनसुखमनुभवतः कालो जगाम । भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ । एकं तु सुतमुखदर्शनसुखं न लेभे । यथा यथा च यौवन-मतिचक्राम तथा तथा विफलमनोरथस्यानपत्यताजन्मावर्धत सन्तापः । नरपतिसहस्रमप्यसहायमिव चक्षुष्मन्तमप्यन्धमिव भुवनालम्बनमपि निरा-लम्बनमिवात्मानममन्यत ।

आसीच्च तस्य भूषणं महिषी विलासवती नाम त्रिभुवनविस्मयजननी

सकलान्तःपुरप्रधानभूता चन्द्रलेखेव हरजटाकलापस्य चन्द्रिकेव चन्द्रमसः। एकदा च तारापीडस्तदावासगतश्चिन्तास्तिमितदृष्टिना शोकमूकेन परिजनेन परिवृतां वामकरतलनिहितमुखकमलां सुनिबिडपर्यङ्किकोपविष्टां रुदतीं ददर्श। कृतप्रत्युत्थानां च तां तस्यामेव पर्यङ्किकायामुपवेश्य भीतभीत इव भूपालस्तामवादीत्। देवि किमर्थमन्तर्गतगुरुशोकभारमशब्दं रुद्यते अतिनिपुणं चिन्तयन्न पश्यामि खलु स्खलितमल्पमप्यात्मनस्त्वद्विषये। त्वदायत्तं हि मे जीवितं राज्यं च। कथ्यतां सुन्दरि शुचः कारणमिति। यदा विलासवती न किमपि प्रतिवचः प्रतिपेदे तदा नृपः परिजनं शोककारणमपृच्छत्। तदा मकरिका नाम सततप्रत्यासन्ना दास्यवदत्। महाराज अद्य चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया तत्र महाभारते वाच्यमाने श्रुतमपुत्राणां किल न सन्ति लोकाः शुभाः। पुन्नाम्नो नरकात्त्रायते इति पुत्र इति। एतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति नोत्तरं प्रतिपद्यते केवलमविरलबाष्पं रोदितीति। तदा तारापीडस्तां सान्त्वयितुं प्रयेते।

कादम्बरी।

---

### टीपा

अभूत्, अकार्षीत्, अवादीत् हीं अनुक्रमें भू, कृ, व वद् या धातूंचीं तृ. भूतकाळी तृ. पु. एकवचनी रूपें होत.

आरोपयति-निक्षिपति. ज्याच्यावर (भार) टाकावयाचा त्याची सप्तमी योजतात.

---

### प्रश्न

१ विजितामरलोकद्युतिः, सप्तद्वीपवलया, परिहृतप्रजापीडः, नीतिशास्त्रप्रयोगकुशलः, त्रिभुवनविस्मयजननी—हीं कोणकोणत्या नामांचीं विशेषणें आहेत हें सांगून त्यांचा स्पष्टार्थ सांगा.

२ वरील उताऱ्यांतील कोणतींहि १० परोक्षभूतकाळी रूपें घेऊन त्याच धातूंचीं तृतीयपुरुषी परोक्षभूतकाळी सर्व रूपें लिहा.

३ चन्द्रिका–चन्द्रमाः, चन्द्रलेखा–हरजटाकलापः – यांचा उपमार्थी उपयोग केलेला आहे. तो कोणासंबंधीं आहे हें सांगा.

४ नरपतेः सन्तापस्य किं कारणम् । विलासवत्याः शुचः किं कारणम् ।

पाठ कराः—शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्द्धकम् ॥

---

# पाठ २९

## रामेण कुशलवपरिग्रहः ।

[ वाल्मीकीचे आश्रमांत सीतेनें कुशलवाना जन्म दिला. रामानें अश्वमेध आरंभिला व त्याकरितां सर्व ऋषींना बोलाविलें. त्याप्रमाणें वाल्मीकि लवकुशासह तेथें गेले. तेथें रामानें सभा बोलाविली व त्या वेळीं कुशलवांनी रामायणाचे गायन केलें. नंतर वाल्मीकींनीं सीता कुश व लव याचा स्वीकार करण्यास रामास सांगितलें.

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ १ ॥
वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ २ ॥
रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ३ ॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ४ ॥
वयोवेषविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ५ ॥

उभयोर्न तथा लोकः प्रावीण्येन विसिस्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६ ॥
गेये केन विनीतौ वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ७ ॥
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ८ ॥
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥ ९ ॥
तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ १० ॥
ताः स्वचारित्र्यमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ११ ॥
इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ १२ ॥

रघुवंशम् ।

---

टीपा

प्राचेतसस्य उपज्ञा—प्राचेतसोपज्ञम्—ष. तत्पुरुष समास. 'उपज्ञा'—'स्वत सिद्ध ज्ञान' हा शब्द शेवटी असता समास नपुंसकलिंगी होतो.

'श्रद् + धा—विश्वास ठेवणें' याचा उपयोग 'ज्याच्यावर विश्वास ठेवावयाचा' त्याची द्वितीया योजून करतात.

स्वसिद्धिं नियमैरिव—ज्याप्रमाणे मुनि तपश्चर्येनें आपलें उद्दिष्ट साधतात (त्याप्रमाणें वाल्मीकींनी आपल्या शिष्यांकडून सीतेला आणविली)

---

प्रश्न

१ लोकः केन कारणेन विस्मितो जातः। रामस्तौ बालौ किमपृच्छत्। वाल्मीकिना रामः किं प्रार्थितः। सीतापरिग्रहमुद्दिश्य रामः किमवदत्।

२ जगतुः, शृण्वताम्, उपेयिवान्, उरीकृत्य, प्रत्याययतु—ही रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

३ किंनरस्वनौ, सावरजः, अक्षिकम्पम्, अश्रुमुखी, प्रीतिदानम्, निर्वाता—हे समास ओळखून त्यांचीं नांवें सांगा.

४ नि + विद् ( प्र. ), नी ( प्र. ), आ + ख्या, अलम्, यथा-तथा—यांचा संस्कृत वाक्यांत उपयोग करा.

पाठ कराः—( १ ) उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः।
( २ ) छात्रान्तेवासिनौ शिष्ये।

---

# पाठ ३०

## चन्दनदासनिग्रहः।

[ नन्द राजाचा पराभव करून चाणक्यानें मौर्य राजा चन्द्रगुप्त याला राज्यावर बसविलें व नन्द वंशाचा पक्षपाती व साहाय्यक जो अमात्य राक्षस त्याचा व त्याच्या कुळाचा नायनाट करण्याचा प्रयत्न केला. अमात्य राक्षसाच्या बाजूचे जे लोक होते त्यांतील चन्दनदास हा प्रमुख होता. त्यानें राक्षसाच्या कुटुंबातील मंडळींना आश्रय दिला होता म्हणून चाणक्यानें याला बोलावून आणून त्याला जाब विचारला त्या वेळचा हा पुढील उतारा 'मुद्राराक्षस' नाटकांतील आहे. ]

( चन्दनदासेन सह प्रविशति शिष्यः )

**शिष्यः**—इत इतः श्रेष्ठिन्।

**चन्दनदासः**—( स्वगतम् )

चाणक्ये अकरुणे सहसा शब्दायितस्यापि जनस्य।
निर्दोषस्यापि शङ्का किं पुनर्मम जातदोषस्य॥

तस्माद्भणिता मया धनसेनप्रमुखा निजनिवेशसंस्थिताः कदापि चाणक्यहतको गेहं विचिनोति। तस्मादवहिता निर्वहत भर्तुरमात्य-राक्षसस्य गृहजनम्। मम तावद्यद्भवति तद्भवत्विति।

**शिष्यः**—भोः श्रेष्ठिन्, इत इतः ।

**चन्दनदासः**—अयमागच्छामि ।

(उभौ परिक्रामतः)

**शिष्यः**—(उपसृत्य) उपाध्याय, अयं श्रेष्ठी चन्दनदासः ।

**चन्दनदासः**—जयत्वार्यः ।

**चाणक्यः**—(नाट्येनावलोक्य) श्रेष्ठिन्, स्वागतमिदमासनमास्यताम् ।

**चन्दनदासः**—किं न जानात्यार्यो यथानुचित उपचारो हृदयस्य परिभवादपि दुःखमुत्पादयति । तस्मादिहैवोचितायां भूमावुपविशामि ।

**चाणक्यः**—भोः श्रेष्ठिन्, मा मैवम् । सम्भावितमेवेदमस्मद्विधैर्भवतः । तदुपविश्यतामासन एव ।

**चन्दनदासः**—(स्वगतम्) उत्क्षिप्तमनेन दुष्टेन किमपि । (प्रकाशम्) यथार्य आज्ञापयति । (उपविष्टः)

**चाणक्यः**—भोः श्रेष्ठिन् चन्दनदास, अपि सञ्चीयन्ते संव्यवहाराणां वृद्धिलाभाः ।

**चन्दनदासः**—(स्वगतम्) अत्यादरः शङ्कनीयः । (प्रकाशम्) अथ किम् । आर्यस्य प्रसादेनाखण्डिता मे वणिज्या ।

**चाणक्यः**—न खलु चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान्स्मारयन्ति प्रकृतीः ।

**चन्दनदासः**—(कर्णौ पिधाय) शान्तं पापम् । शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः ।

**चाणक्यः**—भोः श्रेष्ठिन्, यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः ।

**चन्दनदासः**—आज्ञापयत्वार्यः किं कियदस्माज्जनादिष्यत इति ।

**चाणक्यः**—भोः श्रेष्ठिन्, चन्द्रगुप्तराज्यमिदं न नन्दराज्यम्। यतो नन्दस्यैवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति। चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव।

**चन्दनदासः**—अनुगृहीतोऽस्मि।

**चाणक्यः**—भोः श्रेष्ठिन्, स चापरिक्लेशः कथमाविर्भवतीति ननु भवता प्रष्टव्याः स्मः।

**चन्दनदासः**— आज्ञापयत्वार्यः।

**चाणक्यः**—संक्षेपतो राजन्यविरुद्धाभिर्वृत्तिभिर्भवितव्यम्।

**चन्दनदासः**—आर्य, कः पुनरधन्यो राज्ञा विरुद्ध इत्यार्येणावगम्यते।

**चाणक्यः**—भवानेव तावत्प्रथमम्।

**चन्दनदासः**—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम्। कीदृशस्तृणानामग्निना सह विरोधः।

**चाणक्यः**—अयमीदृशो विरोधः। यस्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि।

**चन्दनदासः**—आर्य, अलीकमेतत्केनाप्यनभिज्ञेनार्यस्य निवेदितम्।

**चाणक्यः**—भोः श्रेष्ठिन्, अलमाशङ्कया। भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति। ततस्तत्प्रच्छादनं दोषमुत्पादयति।

**चन्दनदासः**—एवं नु इदम्। तस्मिन्समयेऽस्मद्गृह आसीदमात्यराक्षसस्य गृहजनः।

**चाणक्यः**—पूर्वमनृतमिदानीमासीदिति परस्परविरोधिनी वचने।

**चन्दनदासः**—एतावदेवास्ति मे वाक्छलम्।

**चाणक्यः**—भोः श्रेष्ठिन्, चन्द्रगुप्ते राजन्यपरिग्रहश्छलानाम् तत्समर्पय राक्षसस्य गृहजनम्। अच्छलं भवतु भवतः।

**चन्दनदासः**—आर्य, ननु विज्ञापयामि तस्मिन्समय आसीदस्मद्गृहेऽमात्यराक्षसस्य गृहजनः।

**चाणक्यः**—अथेदानीं क्व गतः।

**चन्दनदासः**—न जानामि।

**चाणक्यः**—( स्मितं कृत्वा ) कथं न ज्ञायते नाम। भोः श्रेष्ठिन्, शिरसि भयमतिदूरे तत्प्रतीकारः। अन्यच्च चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मा मैवं मंस्थाः।

( नेपथ्ये कलकलः )

**चाणक्यः**—शार्ङ्गरव, ज्ञायतां किमेतत्।

**शिष्यः**—तथा। ( इति निष्क्रम्य पुनः प्रविश्य ) उपाध्याय, एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते।

**चाणक्यः**—क्षपणक, अहह। अथ वा अनुभव राजापथ्यकारित्वस्य फलम्। भोः श्रेष्ठिन् चन्दनदास, एवमयमपथ्यकारिषु तीक्ष्णदण्डो राजा। तत्क्रियतां पथ्यं सुहृद्वचः। समर्प्यतां राक्षसगृहजनः।

**चन्दनदासः**—नास्ति मे गेहेऽमात्यगृहजनः।

**चाणक्यः**—राजापथ्यकारिषु तीक्ष्णदण्डो न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः। तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितं च।

**चन्दनदासः**—आर्य, किं मे भयं दर्शयसि। सन्तमपि गेहेऽमात्यगृहजनं न समर्पयामि, किं पुनरसन्तम्।

चाणक्यः—( सक्रोधम् ) दुरात्मन्, तिष्ठ दुष्ट वणिक् । अनुभूयतां तर्हि नरपतिक्रोधः !

चन्दनदासः—सज्जोऽस्मि । अनुतिष्ठत्वार्य आत्मनोऽधिकारसदृशम् ।

मुद्राराक्षसम् ।

---

टीपा

'अथ किम्—होय, ठीक आहे,' प्रश्नाला होकारार्थी उत्तर देतांना 'अथ किम्' योजतात.

'शान्तं पापम्—इडा पिडा टळो.'

'किं पुनः–किमुत–किमु–किमङ्ग'–यांचा दोन वाक्यांमध्ये उपयोग करतात व त्याचा अर्थ किती जास्त किंवा किती कमी असा सदर्भानुसार होतो.

---

प्रश्न

१ हा संवाद विद्यार्थ्यांकडून पाठ करवून घ्यावा.

२ चन्दनदासाच्या उत्तरांचा सारांश थोडक्यांत संस्कृतमध्यें लिहा.

३ पुढील रूपें ओळखाः—शब्दायितस्य, प्रष्टव्याः, समर्पय, निर्वास्यते, पिधाय.

४ निर्वहत राक्षसस्य गृहजनम् । तदुपविश्यतामासन एव । समर्पय राक्षसस्य गृहजनम् । अनुभूयतां नरपतिक्रोधः । या चार वाक्यांचा प्रयोग बदला.

पाठ कराः—वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥
विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ ।
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोप्यवक्रयः ॥

---

# पाठ ३१

## द्रौपदीविवाहः।



समर्थयामास महानुभावो हृष्टः सपुत्रः सहबन्धुवर्गः।
समानयामास सुतां च कृष्णामाप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ १ ॥
ततस्तु सर्वे सुहृदो नृपस्य समाजग्मुः सहिता मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता द्विजाश्च पौराश्च यथाप्रधानाः ॥ २ ॥
ततोऽस्य वेश्माग्र्यजनोपशोभितं विस्तीर्णपद्मोत्पलभूषिताजिरम्।
बलौघरत्नौघविचित्रमाबभौ नभो यथा निर्मलतारकान्वितम् ॥ ३ ॥
ततस्तु ते कौरवराजपुत्रा विभूषिता कुण्डलिनो युवानः ।
महार्हवस्त्राम्बरचन्दनोक्षिताः कृताभिषेकाः कृतमङ्गलक्रियाः ॥ ४ ॥
पुरोहितेनाग्निसमानवर्चसा सहैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुस्ततः सदो महर्षभा गोष्ठमिवाभिनन्दिनः ॥ ५ ॥
ततः समाधाय स वेदपारगो जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रविन्नियोजयामास सहैव कृष्णया ॥ ६ ॥
प्रदक्षिणं तौ प्रगृहीतपाणी समानयामास स वेदपारगः।
विप्रांश्च सन्तर्प्य युधिष्ठिरो धनैर्गोभिश्च रत्नैर्विविधैश्च पूर्वम्। ७ ॥
तदा स राजा द्रुपदस्य पुत्रिकापाणिं प्रजग्राह हुताशनाग्रतः।
धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ सहाग्निकल्पैर्ऋषिभिः समेत्य ॥ ८ ॥
ततोऽन्तरिक्षात्कुसुमानि पेतुर्ववौ च वायुः सुमनोज्ञगन्धः ।
ततोऽभ्यनुज्ञाप्य समाजशोभितं युधिष्ठिरं राजपुरोहितस्तदा ॥ ९ ॥

विप्रांश्च सर्वान्सुहृदश्च राज्ञः समेत्य राजानमदीनसत्त्वम् ।
जगाद भूयोऽपि महानुभावो वचोऽर्थयुक्तं मनुजेश्वरं तम् ॥ १० ॥
गृह्णन्त्वथान्ये नरदेवकन्यापाणिं यथावन्नरदेवपुत्राः ।
तमभ्यनन्दद् द्रुपदस्तथा द्विजं तथा कुरुष्वेति तमादिदेश ॥ ११ ॥
पुरोहितस्यानुमतेन राज्ञस्ते राजपुत्रा मुदिता बभूवुः ।
क्रमेण चान्ये च नराधिपात्मजा वरस्त्रियास्ते जगृहुः करं तदा ॥१२॥
कृते विवाहे च ततस्तु पाण्डवाः प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः पुरे तु पाञ्चालनृपस्य तस्य ह ॥१३॥

महाभारतम् ।

---

**टीपा**

पहिल्या श्लोकांतील प्रथमान्त पदें द्रुपद राजाला उद्देशून आहेत. ‘ समानयामास ’ याबद्दल ‘ समानाययामास ’ असें सम् + आ + नी या धातूच्या प्रयोजकाचें परोक्षभूत तृ. पु. ए. वचन होईल.

---

**प्रश्न**

१ विवाहविधीचें वर्णन स्वतःचे शब्दांत संस्कृतमध्यें लिहा.

२ सपुत्रः, निर्मलतारकान्वितम्, हुताशनः, सुमनोज्ञगन्धः, यथाविधि, इन्द्रप्रतिमाः, हे समास सोडवून त्यांचा अर्थ सांगा.

३ या वर्णनांतील उपमादर्शक वाक्यें सांगा व त्या वाक्यांचा अर्थ स्पष्ट करा.

४ या श्लोकांतील सर्व पूर्वकालवाचक धातु. अव्ययें लिहून त्यांतील धातूंचीं परोक्षभूतकाळी रूपें लिहा.

पाठ कराः—( १ ) विवाहोपयमौ समौ ।
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥
( २ ) विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलङ्क्रिया ।
अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥

---

# पाठ ३२

## चन्द्रापीडजन्म ।



[ २८ व्या पाठांत वर्णिलेल्या कथाभागाचा पुढील भाग या पाठात आलेला आहे. ]

तारापीडस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्यावोचत् । देवि किमत्र क्रियतां दैवायत्ते वस्तुनि । अलं रुदितेन । न वयमनुग्राह्या प्रायो देवतानाम् । आत्मजपरिष्वङ्गसुखस्य नूनमभाजनमस्माकं हृदयम् । अन्यस्मिञ्जन्मनि न कृतमवदातं कर्म । जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि । न हि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि । यावत्तु मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम् । अधिकां कुरु देवि गुरुषु भक्तिम् । द्विगुणामुपपादय देवतासु पूजाम् । ऋषिजनसपर्यासु दर्शितादरा भव । परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि वराणां दातारो भवन्ति । श्रूयते हि पुरा चण्डकौशिकप्रभावान्मगधेषु बृहद्रथो नाम राजा जनार्दनस्य जेतारं जरासन्धं नाम तनयं लेभे । दशरथश्च राजा विभाण्डकसुतस्य ऋष्यशृङ्गस्य प्रसादादवाप चतुरः पुत्रान् । अमोघफला हि महामुनिसेवा । कदा खल्वहं समुपारूढगर्भभरालसां देवीं द्रक्ष्यामि । कदा च सुतसनाथोत्सङ्गा मामानन्दयिष्यति देवी । कदा च दशनशून्यस्मिताननः पुत्रको मे जनयिष्यति हृदयानन्दम् । इत्येतानि च मनोरथशतानि चिन्तयतो मे प्रयान्ति रजन्यः । मामपि दहत्ययमनपत्यतासमुद्भवः शोकः । शून्यमिव मे प्रतिभाति जगत् । अफलमिव पश्यामि राज्यम् । अप्रतिविधेये तु विधातरि किं करोमि । तन्मुच्यतां देवि शोकानुबन्धः ।

आधीयतां धर्मे धैर्ये च धीः । धर्मपरायणानां हि सदा समीपसञ्चारिण्यो भवन्ति कल्याणसम्पदः । इत्येवमभिधाय सलिलमादाय स्वयं करतलेन साश्रुलेखमस्या आननं ममार्ज । एवं तत्र सुचिरं स्थित्वा तां च समाश्वास्य नरेन्द्रो निर्जगाम । विलासवती भर्तुरुपदेशमनुसृत्य देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्यासु चादरवती बभूव । एवं गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यां स्वप्ने विलासवत्या आननं प्रविशन्तं चन्द्रमसमद्राक्षीत् । प्रबुद्धश्चोत्थाय शुकनासं समाहूय तस्मै स्वप्नं कथयांचकार । स च समुपजातहर्षः प्रत्युवाच । देव सम्पन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः । अवितथफलाश्च प्रायो भवन्ति निशावसानसमये दृष्टाः स्वप्नाः । अचिरेणैव भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । इत्येवमभिदधानमेव तं करेण गृहीत्वा प्रविश्याभ्यन्तरं नरेन्द्रः स्वप्नवर्णनेन विलासवतीमानन्दयाञ्चकार । कतिपयदिवसापगमे विलासवती गर्भिणी जाता । पूर्णे च प्रसवसमये पुण्येऽहनि प्रशस्तायां वेलायां सकललोकहृदयानन्दकारिणं सुतं विलासवती सुषुवे । नृपश्च स्वसूनोः स्वप्नानुरूपं चन्द्रापीड इति नाम चकार ।

कादम्बरी ।

---

टीपा

'वयं देवताना न अनुग्राह्या '—कर्मणि विध्यर्थक धातुसाधितांचा उपयोग करताना मूळ कर्तृपदाची षष्ठी किंवा तृतीया योजतात.

'भक्ति, प्रेम, आदर, स्नेह, दया, कृपा, वागणूक ' अशा अर्थांच्या शब्दांचा उपयोग सप्तम्यन्त नामाबरोबर करतात.

---

प्रश्न

१ तारापीडानें विलासवतीला केलेला उपदेश थोडक्यांत संस्कृतांत लिहा.

२ या उताऱ्यांतील सुभाषितें सांगून त्यांच्या अर्थाचें स्पष्टीकरण करा.

३ दैवायत्तम्, अमोघफला, दशनशून्यस्मिताननः, साश्रुलेखम्, अवितथफलाः— या समासांचा विग्रह देऊन नांवें सांगा.

४ या उताऱ्यांतील वर्त. धातु. विशेषणें दर्शवून त्यांचा उपयोग स्पष्ट करा.

पाठ कराः—( १ ) दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।
( २ ) वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।

---

# पाठ ३३

## द्रौपदी धर्मराजस्य मन्युमुद्दीपयति ।

[ पाण्डव वनवासात असताना धर्मराजाची शांत वृत्ति पाहून रागावलेली द्रौपदी धर्मराजाला युद्धप्रवृत्त करण्याकरिता पुढीलप्रमाणें त्याला बोलते. ]

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥ १ ॥
अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥ २ ॥
व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ ३ ॥
भवन्तमेतर्हि मनस्विगर्हिते निवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ ४ ॥
परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः ।
महाधनः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥ ५ ॥
विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन् करोति मन्युं न कथं धनञ्जयः ॥ ६ ॥

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः ॥ ७ ॥
पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥ ८ ॥
पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥ ९ ॥
विहाय शान्तिं नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥ १० ॥
पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥ ११ ॥
अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥ १२ ॥

किरातार्जुनीयम् ।

---

टीपा

व्यवसाययन्ति (वक्तुम्)—बोलावयाला लावतात. वि + अव + सो याच्या प्रयोजकाचें वर्त. तृ. पु. बहुवचन.

कच्चित्—हें अव्यय प्रश्नार्थी योजतात, व त्या प्रश्नाचें उत्तर 'होय किंवा नाही' हें प्रश्नावरून सूचित होतें.

रतिं कुर्वते—संतुष्ट राहतात, स्वस्थ बसतात.

---

प्रश्न

१ द्रौपदीनें सांगितलेल्या गोष्टी थोडक्यांत गद्यांत लिहा.

२ या उताऱ्यांतील २—३ उपमा दर्शवून त्यांचें स्पष्टीकरण करा.

३ अन्तर्गिरि, मूढधियः, उच्छिखः, जटाधरः, प्रमदाजनोचितम्—हे समास सोडवून त्यांची नांवें सांगा.

४ विवर्तमानम्, विचिन्तयन्त्याः, अधिशय्य, सन्धेहि, सञ्जुहुधि—हीं रूपें ओळखा.

पाठ कराः—आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ।
पुलोमजा शचीन्द्राणी नगरी त्वमरावती ।

---

# पाठ ३४

## शूद्रकसभायां शुकागमनम् ।

आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरश्चतुरुदधिमालामेखलाया भुवो भर्ता चक्रवर्तिलक्षणोपेतो राजा शूद्रको नाम । स चाहर्ता क्रतूनामादर्शः सर्वशास्त्राणामुत्पत्तिः कलानामाश्रयो रसिकानां धौरेयः साहसिकानामग्रणीर्विदग्धानाम् । तस्य च राज्ञो वेत्रवत्या सरिता परिगता विदिशाभिधाना नगरी राजधान्यासीत् । स च लीलया भुजेन भुवनभारमुद्वहन्नमरगुरुमपि प्रज्ञयोपहसद्भिरमात्यैः परिवृतः समानवयोविद्यालङ्कारै राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास । एकदा तु नातिदूरोदिते भगवति सहस्रमरीचिमालिनि राज्याधिदेवतेव विग्रहिणी प्रतीहारी राजानमुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत् । देव द्वारि स्थिता दक्षिणापथादागता चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं द्रष्टुमिच्छतीति । उपजातकुतूहलो राजा समीपवर्तिनां राज्ञामवलोक्य मुखानि प्रवेश्यतामित्यादिदेश । अथ

प्रतीहारी नरपतिवचनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत् । प्रविश्य सा नरपतिसहस्रमध्यवर्तिनं दर्शनीयाकारं राजानमद्राक्षीत् । आलोक्य च सा दूरस्थितैव पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रतिबोधनार्थं सकृत्सभाकुट्टिममाजघान । अतः सकलमेव राजकमेकपदे तेन वेणुलताध्वनिना तदभिमुखमासीत् । अवनिपतिस्तु प्रतीहार्या निर्दिश्यमानां सशुकं पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानामचिरोपरूढयौवनामतिशयरूपाकृतिमनिमेषलोचनो ददर्श । तस्या अप्रतिमलावण्यमुद्दिश्य विधातुरविचारतां यावत्स चिन्तयति तावदेव सा कन्यका तं प्रगल्भवनितेव प्रणनाम । कृतप्रणामायां च तस्यां मणिकुट्टिमोपविष्टायां तयासहागतः पुरुषस्तं पञ्जरगतं विहङ्गमादाय किञ्चिदुपसृत्य राज्ञे न्यवेदयत् । देव विदितसकलशास्त्रार्थो राजनीतिप्रयोगकुशलः सकलभूतलरत्नभूतोऽयं वैशम्पायनो नाम शुको देवस्यैव योग्य इति मत्वास्मत्स्वामिदुहिता देवपादमूलमागता । तदयमात्मीयः क्रियतामित्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार । चाण्डालकन्यका तु तत्रैव स्थिता ।

कादम्बरी ।

---

टीपा

अद्राक्षीत्—दृश् धातुचे तृ. भूतकाळी तृ. पु. ए. व.—अपश्यत्.

देवस्य योग्य —योग्यतावाचक शब्दाचा उपयोग षष्ठ्यन्त नामांबरोबर करतात.

---

प्रश्न

१ शूद्रक राजाचें सोप्या संस्कृत भाषेंत वर्णन करा.

२ समानवयोविद्यालङ्काराः, दक्षिणापथः, उपजातकुतूहलः, अनिमेषलोचनां, पञ्जरगतः—या समासांचा विग्रह करून नांवें सांगा.

३ प्रवेश्यताम्, निर्दिश्यमाना, उद्वहता, उपसृत्य, चिन्तयति—हीं वरील उताऱ्यांतील रूपें ओळखून त्यांचा निराळ्या वाक्यांत उपयोग करा.

४ या उताऱ्यांतील कोणत्याही ५ भूतकाळी क्रियापदांबद्दल भूत. धातु. विशेषणे योजा.

पाठ कराः—( १ ) द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।

( २ ) पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥

---

# पाठ ३५

## पाण्डवानां द्वैतवनप्रवेशः ।

[ वनवासांत असतांना पाण्डव द्वैत वनात आले त्या वेळचा हा उतारा आहे. ]

तत्सालतालाम्रमधूकनीपकदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं महावनं राष्ट्रपतिर्ददर्श ॥ १ ॥
महाद्रुमाणां शिखरेषु तस्थुर्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसङ्घास्तस्मिन्वने बर्हिणकोकिलाश्च ॥ २ ॥
करेणुयूथैः सह यूथपानां मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ ३ ॥
मनोरमां भोगवतीमुपेत्य पूतात्मनां चीरजटाधराणाम् ।
तस्मिन्वने धर्मभृतां निवासे ददर्श सिद्धर्षिगणाननेकान् ॥ ४ ॥
ततः स यानादवरुह्य राजा सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः ॥ ५ ॥
तं सत्यसन्धं सहिताऽभिपेतुर्दिदृक्षवश्चारणसिद्धसङ्घाः ।
वनौकसश्चापि नरेन्द्रसिंहं मनस्विनं तं परिवार्य तस्थुः ॥ ६ ॥

स तत्र वृद्धानभिवाद्य सर्वान् प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैः सहितो द्विजाग्र्यैः कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ ७ ॥
स पुण्यशीलः पितृवन्महात्मा तपस्विभिर्धर्मपरैरुपेत्य ।
प्रत्यर्चितः पुष्पधरस्य मूले महाद्रुमस्योपविवेश राजा ॥ ८ ॥
भीमश्च कृष्णा च धनञ्जयश्च यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्य वाहानवशाश्च सर्वे तत्रोपतस्थुर्भरतप्रबर्हाः ॥ ९ ॥
लतावतानावनतः स पाण्डवैर्महाद्रुमः पञ्चभिरेव धन्विभिः ।
बभौ निवासोपगतैर्महात्मभिर्महागिरिर्वारणयूथपैरिव ॥ १० ॥

महाभारतम् ।

---

## टीपा

सभ्रातृकः—भ्रातृभि सह–सह बहु. ऋकारान्त अन्त्यपद असेल तर बहुव्रीहि समासाच्या शेवटी क जोडतात.

भोगवती—सरस्वती नदी. तपात्ययः—उन्हाळा संपणें.

---

## प्रश्न

१ या पाठांतील झाडांचीं नांवें व पक्ष्यांची नांवें सांगा.

२ राष्ट्रपति धर्मराजांनीं द्वैत वनांत जें जें पाहिलें तें थोडक्यांत संस्कृतमध्यें लिहा.

३ दहाव्या श्लोकांतील उपमेचा अर्थ स्पष्ट करून सांगा.

४ उदीरयन्तः, दिदृक्षवः, परिवार्य, पितृवत्, उपतस्थुः—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

५ पुष्पधराः, अचलप्रभाः, धर्मभृतः, अमितौजाः व कृताञ्जलिः—हे समास सोडवून नांवें सांगा.

पाठ कराः—वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ।

---

# पाठ ३६

## शुकवृत्तान्तः ।

अस्ति मध्यदेशालङ्कारभूता पादपैरुपशोभिता लतामण्डपैर्विराजिता मुनिजनसेविता पवित्रा विन्ध्याटवी नाम । तस्यां च दण्डकारण्ये भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वयं संवर्धितैः पादपैरुपशोभितं गोदावर्या परिगतमाश्रमपदम् । तत्र च दशरथवचनानुसारी रामो भार्यया सीतया सह लक्ष्मणोपरचितायां पर्णशालायामुवास । तस्याश्रमस्य नातिदूरेऽगाधमनन्तमप्रतिममपां निधानं पम्पाभिधानं पद्मसरः । तस्य च पद्मसरसः पश्चिमे तीर आसीच्छाल्मलीवृक्षोऽधिपतिरिव दण्डकारण्यस्य नायक इव सर्ववनस्पतीनां सखेव विन्ध्यस्य । तस्य च कोटरोदरेषु विरचितकुलायसहस्राणि नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म । एकस्मिञ्जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य पितुरहमेवैको विधिवशात्सूनुरभवम् । प्रबलप्रसववेदनाभिभूता मे जननी लोकान्तरमगमत् । अतो जायावियोगदुःखितोऽपि मे पिता मत्संवर्धनपर एवाभवत् ।

एकदा तु प्रत्यूषस्येव मृगयाकोलाहलध्वनिरुदचरत् । अश्रुतपूर्वं तं नादमाकर्ण्य भयविह्वलः समीपवर्तिनः पितुर्जराशिथिलपक्षपुटान्तरमविशम् । तत्रस्थोऽहं मृगयासक्तस्य महतो जनसमूहस्य क्षोभितकाननं कोलाहलमश्रृणवम् । अचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य तद्दिदृक्षुस्तामेव

दिशं चक्षुः प्राहिणवम् । अभिमुखमापतच्छबरसैन्यमद्राक्षम् । मध्ये च तस्य सैन्यस्य प्रथमे वयसि वर्तमानमनभिभवनीयाकृतिं शबरसेनापतिमपश्यम् । तं दृष्ट्वा मोहप्रायमेतेषां जीवितं साधुजनविगर्हितं च चरितमिति चिन्तयत्येव मयि स शबरयुवा तस्यैव शाल्मलीतरोरधः पल्लवासने समुपाविशत् । तत्र स सलिलपानेन मृणालिकादशनेन च श्रमपरिहारं कृत्वा शनैः शनैः सकलेन शबरसैन्येनानुगम्यमानोऽभिमतं दिगन्तरमयासीत् । एकतमस्तु जरच्छबरः पिशितार्थी तस्मिन्नेव तरुतले व्यलम्बत । अन्तरिते शबरसेनापतौ स वनस्पतेः शाखान्तरेभ्यः कोटरेभ्यश्च शुकशावकानग्रहीत् । अपगतासूंश्च कृत्वा तान्क्षितावपातयत् । पश्चात्स पापः कोटरद्वारमागत्य वामबाहुं प्रसार्य तातमाकृष्यापगतासुमकरोदधश्च प्राक्षिपत् । अहमपि तेन सहाधः क्षिप्तोऽवशिष्टपुण्यतया शुष्कपल्लवराशेरुपरि पतितः । यावत्स शबरः क्षितितलविप्रकीर्णाञ्शुकशिशून्संहत्यागच्छत्तावदेव बलवती पिपासा मां परवशमकरोत् । अतः स पापः सुदूरमपक्रान्त इति निश्चित्य तस्मात्तमालतरुमूलाच्छनैः शनैर्निष्क्रम्य सलिलसमीपमुपसर्तुं प्रयत्नमकरवम् ।

कादम्बरी ।

---

टीपा

अद्राक्षम्—'दृश्' धातुचें तृ. भूतकाळी प्रथम पु ए. वचन.

दिगन्तरम्—अन्या दिक् ( नित्यसमास )

अयासीत्—'या' धातुचें तृ. भूत. तृ. पु ए. वचन. अग्रहीत्-( ग्रह् ) तृ. भू. तृ. पु. ए वचन.

शाखान्तरम्—शाखानाम् अनन्तरम् ( ष. तत्पु )

---

## प्रश्न

१ अगस्त्यस्याश्रमपदे पूर्वं कोऽवसत्। वनस्पतिः कुत्रातिष्ठत्। शुकस्य जननी केन कारणेन मृता। एकदा प्रातः किं दृष्टं शुकेन। जरच्छबरः किमर्थं व्यलम्बत। शुकशिशुः कथं रक्षितः।

२ या उताऱ्यांतील ' सति सप्तमी ' रचना दर्शवून त्यांबद्दल वाक्यें योजा.

३ पुढील वाक्यें दर्शविल्याप्रमाणें बदलून लिहाः—

१ रामः पर्णशालायामुवास। ( ' पर्णशाला ' शब्द द्वितीयेंत योजा )

२ जननी **लोकान्तरमगमत्**। ( जाड अक्षरांतील शब्दांबद्दल एक-शब्द योजा )

३ **यावत् शबरः शुकशिशून्संहृत्य अगच्छत् तावत्** पिपासा मां परवशमकरोत्। ( जाड अक्षरांतील वाक्याबद्दल सति सप्तमी योजा )

४ अहं कोलाहलमशृणवम्। ( ' कोलाहल ' शब्द प्रथमेंत योजा )

४ अनन्तम्, विरचितकुलायसहस्राणि, मत्संवर्धनपरः, पिशितार्थी, अपगतासून्—हे समास सोडवून नांवें सांगा.

पाठ कराः—( १ ) आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्।

( २ ) खगे विहंगविहगविहंगमविहायसः।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः।

---

# पाठ ३७

## रामाज्ञया लक्ष्मणः सीतां वने विजहाति

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश॥ १॥

प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥२॥
स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥ ३ ॥
सा नीयमाना रुचिरान्प्रदेशान्प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४ ॥
गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहाय ।
गङ्गां निषादाहृतनौविशेषस्ततार सन्धामिव सत्यसन्धः ॥ ५ ॥
अथ व्यवस्थापितवाक्कथंचित् सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्पातिको मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ६ ॥
सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ ७ ॥
आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ॥ ८ ॥
सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते वत्स चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ९ ॥
वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ १० ॥
निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ११ ॥
साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥१२॥

रघुवंशम् ।

---

'प्रजावती—भ्रातृजाया.'

'तपोवनेषु स्पृहयालुः'—स्पृह् व त्यापासून होणारे शब्द याचा उपयोग इष्ट वस्तूची सप्तमी योजून करतात. क्वचित् चतुर्थीहि येते.

शुश्रुवान्—'शुश्रुवस्' या 'श्रु' धातूच्या द्वि. भूत धातु. विशेषणाचें पुं. प्र. ए. व.

असिपत्रवृक्ष—खड्गाकारदलो नरको नाम कोऽप्यपूर्वो वृक्षविशेषः।

बिडौजस् (पुं.)—इन्द्र.

---

## प्रश्न

१ रामः केन व्यपदेशेन सीतां वनं प्राहिणोत्। किमासीद्यथार्थं कारणम्। रामशासनस्य श्रवणेन सीताया अवस्था कीदृशी जाता। सा रामं लक्ष्मणमुखेन किमश्रावयत्।

२ 'सीतात्याग लक्ष्मणाला पसंत नव्हता तरीसुद्धां त्याला रामाची आज्ञा मानावी लागली' या अर्थाच्या श्लोकाचा स्पष्टार्थ लिहा.

३ लोकत्रयगीतकीर्तिः, निषादाहृतनौविशेषः, निशाचरोपप्लुतभर्तृकाः, जननान्तरम्, आख्यातवाल्मीकिनिकेतमार्गः— या समासांचा विग्रह करून त्यांची नांवें सांगा.

४ प्रापय्य, अबुद्ध, आश्वास्य, अह्वासीः, प्रपत्स्ये—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ करा:—(१) आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी।

(२) पञ्चैते देवतरवो मन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥

---

# पाठ ३८

## उर्वशीपुरूरवसोः सुतसङ्गमः ।

[ हा उतारा कालिदास कवीच्या 'विक्रमोर्वशीयम्' या नाटकांतील आहे सोमवंशांतील 'पुरूरवस्' राजानें उर्वशीशीं विवाह केला. आयुः नांवाचा तिला मुलगा झाला, परंतु मुलाचें सुख दृष्टीस पडेपर्यंत तू पृथ्वीवर राहा असा शाप इन्द्रानें तिला दिला असल्यामुळें तिनें मुलाला जन्मतःच च्यवन ऋषीच्या आश्रमांत ठेविला. त्या मुलानें आश्रमनियमांविरुद्ध आचरण केलें म्हणून त्याला च्यवन ऋषीनीं त्याचे आईकडे पाठविला. त्या वेळचा हा उतारा आहे. ]

**राजा**—( तापसीकुमारौ दृष्ट्वा ) अम्ब अभिवादये ।

**तापसी**—महाभाग सोमवंशविस्तारयिता भव । ( आत्मगतम् ) अहो अनाख्यातोऽपि विज्ञात एतस्य राजर्षेरौरसः सम्बन्धः । जात प्रणम ते गुरुम् ।

**कुमारः**—( चापगर्भमञ्जलिं करोति )

**राजा**—आयुष्मान् भव ।

**कुमारः**—( आत्मगतम् )

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गवर्धितानां गुरुषु भवेत्कीदृशः स्नेहः ॥

**राजा**—भगवति किमागमनप्रयोजनम् ।

**तापसी**—शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत्क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

**राजा**—सनाथः खलु संवृत्तः ।

**तापसी**—अद्य पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितम् ।

**विदूषकः**—( सावेगम् ) किमिव ।

तापसी—गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।

विदूषकः—( राजानमवलोकयति )

राजा—ततस्ततः ।

तापसी—तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा । निर्यातय हस्तन्यासमिति । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।

राजा—तेन हि आसनमनुगृह्णातु भगवती ।

तापसी—( उपनीत आसन उपविशति)

राजा—लातव्य आहूयतामुर्वशी ।

कञ्चुकी—यथाज्ञापयति देवः । ( इति निष्क्रान्तः )

राजा—( कुमारमवलोक्य ) एह्येहि वत्स ।

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥

तापसी—जात आनन्दय पितरम् ।

कुमारः—( राजानमुपगम्य पादग्रहणं करोति )

राजा—( कुमारं परिष्वज्य पादपीठे चोपवेश्य ) वत्स इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

विदूषकः—किमिति शङ्किष्यते । आश्रमवासपरिचित एव शाखामृगः ।

कुमारः—( सस्मितम् ) तात वन्दे ।

विदूषकः—स्वस्ति भवते । ( ततः प्रविशत्युर्वशी कञ्चुकी च )

कञ्चुकी—इत इतो देवी ।

उर्वशी—( [illegible] ) को नु खल्वेष सबाणासनः पादपीठे

स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति । ( तापसीं दृष्ट्वा ) अहो सत्यवतीसूचितो मम पुत्रक आयुः । महान्खलु संवृत्तः । ( परिक्रामति )

राजा—( उर्वशीं दृष्ट्वा ) इयं प्राप्ता ते त्वदालोकनतत्परा जननी ।

तापसी—जात एहि प्रत्युद्गच्छ मातरम् ।

कुमारः—( उर्वशीं प्रत्युद्गच्छति )

उर्वशी—अम्ब पादप्रणामं करोमि ।

तापसी—वत्से भर्तुर्बहुमता भव ।

कुमारः—अम्ब अभिवादये ।

उर्वशी—( कुमारमुन्नमितमुखं परिष्वज्य ) वत्स पितरमाराधयिता भव । ( राजानमुपेत्य ) जयतु जयतु महाराजः ।

राजा—स्वागतं पुत्रवत्यै । इत आस्यताम् । ( अर्धासनं ददाति )

उर्वशी—( उपविशति )

( सर्वे यथोचितमुपविशन्ति )

तापसी—एष गृहीतविद्य आयुः साम्प्रतं कवचधरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः ।

उर्वशी—चिरस्यार्यां दृष्ट्वाधिकतरमवितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यमुपरोद्धुम् । गच्छत्वार्या पुनर्दर्शनाय ।

राजा—अम्ब भगवते च्यवनाय मां प्रणिपातय ।

तापसी—एवं भवतु ।

कुमारः—आर्ये सत्यं यदि निवर्तसे मामप्याश्रमं नेतुमर्हसि ।

राजा—अयि वत्स उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

तापसी—जात गुरोर्वचनमनुतिष्ठ ।

कुमारः—तेन हि

य: सुप्तवान्मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥

तापसी—( विहस्य ) एवं करोमि । स्वस्ति भवतु युष्मभ्यम् ।

( इति निष्क्रान्ता )

विक्रमोर्वशीयम् ।

---

टीपा

ततस्तत—पुढें सांगा. गोष्ट सांगतांना मध्येंच थांबल्यावर 'पुन्हा सुरू करा' असें सांगतांना हा शब्द योजतात.

किमपि न्यासीकृत—कांहीं ठेव ठेवणें. न्यासं निर्यातय—ठेव परत करणें. निर् + यत् ( १० उ. प. )

---

प्रश्न

१ हा संवाद मुलांकडून पाठ करवून घ्यावा.

२ पितरं दृष्ट्वा कुमारेण किं चिन्तितम् । किमर्थं स आश्रमादृषिणा प्रेषितः । किमर्थं विदूषकान्न भीतः स बालः । पुत्रमालिङ्ग्योर्वश्या किमभिहितम् ।

३ को नु खल्वेषः । भर्तुर्बहुमता भव । स्वस्ति भवते । गुरुषु भवेत्कीदृशः स्नेहः ।—या वाक्यांच्या विशिष्ट रचनेचें स्पष्टीकरण करा.

४ लक्ष्यीकृतः, निलीयमानः, आहूयताम्, संयम्यमान, निर्यातितः—हीं रूपें ओळखून त्यांचा वाक्यांत उपयोग करा.

पाठ करा:—( १ ) काकपक्षः शिखण्डकः ।

( २ ) शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ।

उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ।

---

# पाठ ३९

## लङ्कावर्णनम् ।



[ मारुति सीताशोधार्थ लंकेंत गेला त्या वेळचें हें वर्णन रामायणांतील आहे. ]

स वेश्मजालं बलवान् ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥ १ ॥
निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥
गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥
तानि प्रयत्नाभिसमाहृतानि मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥
ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् ।
रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥
महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥
यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥ ७ ॥

(यत्र) मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ८ ॥
(यत्र) कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पाण्यपि पुष्कराणि ।
पुनश्च पद्मानि सकेसराणि धन्यानि चित्राणि तथा वनानि ॥ ९ ॥
पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विवर्धमानम् ।
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् (ददर्श)॥ १० ॥

रामायणम् ।

---

## टीपा

'नानातरूणां कुसुमावकीर्णं'—'तरु' शब्दाचा संबंध 'कुसुमांकडे' घ्यावा.

व्यासक्तवैदूर्यसुवर्णजालम्—वैदूर्यसुवर्णयोः जालानि (वैदूर्यघटितानि सुवर्णमयानि) व्यासक्तानि वैदूर्यसुवर्णजालानि यस्मिन् तत्—ज्यांना वैदूर्य व सोनें यानी बनविलेल्या खिडक्या आहेत अशा वाड्याचा समूह. जालम्—समूह—खिडकी.

प्रधानशङ्खायुधचापशाला—प्रधानैः शङ्खायुधचापैः शालन्ते ता—उत्तम उत्तम शंख, शस्त्रें व धनुष्यें यानी शोभणाऱ्या.

युक्तीकृत—पृक्तीकृत.

---

## प्रश्न

१ मारुतिर्लङ्कायां किं किं ददर्श तद्वर्णयत गद्यरूपेण ।

२ रावणाच्या विमानाचे वर्णन करा व त्यांत योजलेल्या उपमांचें स्पष्टीकरण करा.

३ या श्लोकांमध्ये रचनादृष्ट्या काय विशिष्ट गोष्ट दिसते तें सोदाहरण सांगा.

४ तुम्हांस वरील श्लोकांतील कोणता श्लोक आवडतो हें सकारण सांगा

पाठ करा—(१) व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ।
स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ॥
(२) वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।

---

# पाठ ४०

## जाबाल्याश्रमदर्शनम् ।

[ वैशम्पायन नावाचा शुक आपली गोष्ट सांगत आहे. ३६ व्या पाठाच्या पुढील कथाभाग यात आहे. ]

एवं सलिलपानार्थं महता कष्टेन संसर्पतो धूलिधूसरस्य समभून्मे मनसि। अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति सर्वप्राणिनां प्रवृत्तयः । नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम्। यदुपरतेऽपि तातेऽहमविकलेन्द्रियः प्राणिमि। धिङ्मामकरुणमतिनिष्ठुरमकृतज्ञम् । खलं खलु मे हृदयं यत्तेन पितृकृतं सर्वं परिपालनकर्मैकपद एव विस्मृतम् । अतिकृपणाः खल्वमी प्राणाः । यदुपकारिणमपि तातमद्यापि नानुगच्छन्ति । सर्वथा न कञ्चिन्न खलीकरोति जीविततृष्णा । यदीदृगवस्थमपि मामायासयति जलाभिलाषः । अद्यापि दूर एव सरस्तीरम् । अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि । अप्रभुरस्म्यात्मनः । सीदति मे हृदयम् । अन्धकारतामुपयाति चक्षुः । अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्योपपादयेत् । इत्येवं चिन्तयति मयि तस्मात्सरसः समीपवर्तिनि तपोवने निवसतो जाबालेस्तनयो हारीतनामा तदेव कमलसरः सिष्णासुरुपागमत् । प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि । यतः स तदवस्थं मामवलोक्य समुपजातदयः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत् । अयं शुकशिशुरसञ्जातपक्षपुट एव तरुशिखरादस्मात्कथमपि परिच्युतः । श्येनमुखात्परिभ्रष्टेन वानेन भवितव्यम् । अयं न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवाय

मसुभिर्न वियुज्यते तावदेव गृहाणेममवतारय सलिलसमीपम्। इत्यभिधाय स तेन मां सरसस्तीरमानाययत्। उपसृत्य च जलसमीपं स्वयं मामङ्गुल्या कतिचित्सलिलबिन्दूनपाययत्। पश्चान्मां नलिनीपलाशस्य जलशिशिरायां छायायां निधाय समुचितमकरोत् स्नानविधिं सः। अभिषेकावसानेऽनेकप्राणायामपूतो भगवते सवित्रे दत्त्वार्घमुदतिष्ठत्सः। कमण्डलुं चापूर्य शुचिना सरोवारिणा मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत्। अल्पेनैव कालेन कोऽप्यतिरमणीय आश्रमो मया दृष्टः। तन्मध्यभागमण्डलमलङ्कुर्वाणं भगवन्तं जाबालिमप्यहमद्राक्षम्। तं दृष्ट्वाहमचिन्तयम्। अहो प्रभावस्तपसाम्। पुण्यानि हि नामग्रहणानि मुनीनां किं पुनर्दर्शनानि। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। अहो प्रभावो महात्मनाम्। अत्र शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति। एवं चिन्तयन्तमेव मामशोकतरोश्छायायां स्थापयित्वा हारीतो जाबालये मद्वृत्तं निवेदितवान्।

कादम्बरी।

---

टीपा

'धिक्-धिक्कार असो' या अव्ययाचा उपयोग द्वितीयान्त नामावरोबर करतात.

'न कश्चिन्न खलीकरोति-सर्वान् खलीकरोत्येव'-दोन नकारवाचक शब्द एकाच वाक्यात योजले असतां त्याचा होकारार्थी अर्थ होतो. 'द्वौ नञौ प्रकृतार्थं गमयतः'।

'अप्रभुरस्यात्मनः'—प्र + भू, ईश् व इतर सत्तावाचक शब्द याचा उपयोग षष्ठ्यन्त शब्दांबरोबर करितात.

'अपि नाम'—या अव्ययांचा उपयोग इच्छा किंवा अपेक्षा दर्शविण्याकरितां करितात. क्रियापद बहुधा विध्यर्थी असतें.

'किं पुनः'—'किती जास्त किंवा किती कमी' या अर्थी हीं अव्ययें दोन वाक्यामध्यें योजतात. 'किं पुनः' याबद्दल 'किमुत, किमु, किमङ्ग' अशीं अव्ययेंहि योजतात.

---

### प्रश्न

१ शुक्रस्य मनोविचारान् सुगमभाषया वर्णयत ।

२ इमं सलिलसमीपमवतारय ।' मामायासयति जलाभिलाषः । विधिर्मे मरण-मुपपादयेत् । स मां तेनानाययत् । स मां सलिलबिन्दूनपाययत्—या वाक्यांची मूळ वाक्यें लिहा व यांचा कर्मणि प्रयोग करा.

३ आपूर्य, संसर्पतः, अवसन्नानि, निवेदितवान्, सिष्णासुः—हीं रूपें ओळखून वाक्यांत योजा.

४ या उताऱ्यांतील सुभाषितें लिहा.

पाठ करा:—पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ।
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥

---

# पाठ ४१

## नवसाहसाङ्कवर्णनम् ।

[ नवसाहसाङ्क हा परमार घराण्यांतील प्रसिद्ध राजा होता. हें काव्य पद्मगुप्त नांवाच्या कवीनें लिहिलें. ]

निर्व्यूढनानाद्भुतसाहसं च रणे वृतं च स्वयमेव लक्ष्म्या ।
नाम्ना यमेके नवसाहसाङ्कं कुमारनारायणमाहुरन्ये ॥ १ ॥
सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥ २ ॥
पराङ्मुखेनापि सदा परस्वे पत्या भुवः सागरमेखलायाः ।
अहो यशः पूर्वमहीपतीनामनाविलं येन बलाद्विलुप्तम् ॥ ३ ॥
चित्तं प्रसादश्च मनस्विता च भुजप्रतापश्च वसुंधरा च ।
अध्यासते यस्य मुखारविन्दं द्वे एव सत्यं च सरस्वती च ॥ ४ ॥

प्रसादिता येन च बाल्य एव चतुर्भिरुत्साहवता चतस्रः ।
श्रुतेन बुद्धिः प्रभुता नयेन त्यागेन लक्ष्मीर्वसुधा बलेन ॥ ५ ॥
रणे रणे मुक्तकृपः कृपाणं यः शातधारं कृतवान्कृतास्त्रः ।
अनेकराजन्यघटाकिरीटमाणिक्यशाणोपलपट्टिकासु ॥ ६ ॥
कृताननतिभ्यः सहसा ददाति यः साम्परायेष्वभयं रिपुभ्यः ।
यशश्च गृह्णाति तुषारहारमृणालकर्पूरपरागपाण्डु ॥ ७ ॥
यस्य प्रयाणे पृतनाभरेण परिस्खलत्सप्तसमुद्रमुद्रा ।
परस्परक्षोदसमाकुलासु दोलायते भूः फणभृत्फणासु ॥ ८ ॥
असंशयं प्रागसृजद्विधाता यमेकमेव त्रिजगद्वदान्यम् ।
कल्पद्रुमादीनथ तैस्तदीयनिर्माणशेषैः परमाणुलेशैः ॥ ९ ॥
श्रियि प्रतापे यशसि क्षमायां त्यागे विलासे विनये महिम्नि ।
किमन्यदारोहति यस्य साम्यं न रन्तिदेवो न पृथुर्न पार्थः ॥ १० ॥

नवसाहसाङ्कचरितम् ।

---

## टीपा

अनेक......पट्टिकासु कृपाणं कृतवान्—...कस लावण्याच्या सपाट दगडावर तलवार चालवली. न एका.–अनेका । राजन्यानां घटा. राजन्यघटा । तासाम् किरीट. । तेषां माणिक्यानि । तेषां शाणोपलपट्टिका. । तासु ।

---

## प्रश्न

१ नवसाहसाङ्काचें सोप्या संस्कृत भाषेंत वर्णन करा.
२ या वर्णनांतील कोणता श्लोक तुम्हांला आवडतो हें सकारण सांगा.
३ शरदिन्दुपाण्डु, मुखारविन्दम्, मुक्तकृपः, कृताननतिभ्यः, तुषारहारमृणालकर्पूरपरागपाण्डु—हे समास सोडवून त्यांचीं नांवें सांगा.

पाठ करा:—( १ ) स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना स्त्रियाम् ।

( २ ) ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥

---

# पाठ ४२

## बालकवृत्तान्तः ।



एकदा वामदेवशिष्यः कुमारमेकमादाय नरपतिमवादीत् । "देव, तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम् । 'स्थविरे का त्वम् । अयमर्भकः कस्य नयनान्दकरः कान्तारं किमर्थमागता शोककारणं किम्' इति । सा करयुगेन बाष्पजलमुन्मृज्य निजशोकशङ्कूत्पाटनक्षममिव मामवलोक्य शोकहेतुमवोचत् । 'द्विजात्मज राजहंसमन्त्रिणः सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राभिलाषेण देशमेनमागच्छत् । स कस्मिंश्चिदग्रहारे कालीं नाम कस्यचिद्भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत । काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन मिषेणानीय तटिन्यामेतस्यामक्षिपत् । करेणैकेन बालमुद्धृत्यापरेण प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदीवेगेनोह्यमाना केनचित्तरुलग्नेन कालभोगिनाहमदंशि । मदवलम्बीभूतो भूरुहोऽयमस्मिन्देशे तीरमगमत् । गरलस्योद्दीपनतया मयि

मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यते ' इति। ततो विषमविषज्वालावलीढावयवा सा धरणीतले न्यपतत्। दयाविष्टहृदयोऽहं मन्त्रबलेन विषव्यवस्थामपनेतुमक्षमः समीपकुञ्जेष्वौषधिविशेषमन्विष्य प्रत्यागतो व्युत्क्रान्तजीवितां तां व्यलोकयम्। तदनु तस्याः पावकसंस्कारं विरच्य शोकाकुलचेता बालमेनमगतिमादाय भवदमात्यतनयस्य भवानेवाभिरक्षितेति भवन्तमेनमानयम् '' इति। तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयं समर्पितवान्। सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष।

दशकुमारचरितम्।

---

टीपा

अवादीत्, अवोचत्, अगमत्,— वद्, वच् व गम् या धातूंचीं तृ. भू. तृ. पु. ए. वचनी रूपें.

अदर्शि—दृश् धातूचें तृ. भू. कर्मणि तृ. पु. ए. वचनी रूप.

---

प्रश्न

१ वाक्यें पुरीं कराः—

(१) काली धात्र्या सहैमं बालकं नद्यामक्षिपत् यतः.............. ।

(२) बालस्य न कोऽपि शरण्योऽस्ति यतः.................. ।

(३) सा स्थविराचिरादेव मृता यतः..................... ।

(४) नरपतिस्तं बालं सुमतये समर्पितवान् यतः............ ।

२ विलोलालकः, निजशोकशङ्कूत्पाटनक्षमः, काञ्चनकान्तिः, सासूयम्, भूरुहः शोकाकुलचेताः, सोदरः—हे समास सोडवून त्यांचीं नांवें सांगा.

३ या उताऱ्यांतील सर्व पूर्वकालवाचक अव्ययें दर्शवून तीं कोणत्या धातूंचीं व कशीं बनविलेलीं आहेत तें लिहा.

पाठ कराः—( १ ) प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ।
( २ ) पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ।
पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥

---

# पाठ ४३

## रघुदिग्विजयः ।



स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ १ ॥
रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २ ॥
मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३ ॥
स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ४ ॥
पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ५ ॥
अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ६ ॥
वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ७ ॥

आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ८ ॥
स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ९ ॥
स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ १० ॥
प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ११ ॥
द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ १२ ॥
गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ १३ ॥

रघुवंशम् ।

---

## टीपा

'तान् तान्'—विविधान् । तद् सर्वनामाच्या द्विरुक्तीचा अर्थ विविध असा होतो.

'वैतसीं वृत्तिम् आश्रित्य—लव्हाळ्याचा मार्ग आचरून म्हणजे शत्रूपुढें मान लववून.' वेतस· इयम्—वैतसी.

कपिशा—एका नदीचें नांव. कलमा —साळीचे रोपे.

---

## प्रश्न

१ रघु राजानें केलेल्या दिग्विजयाचें संस्कृत भाषेंत वर्णन करा.

२ या उताऱ्यांतील उपमांचें स्पष्टीकरण करा.

३ गंगेला आणणारा भगीरथ व पर्वतांचे पंख तोडणारा इन्द्र यांचें थोडक्यांत संस्कृतमध्यें वर्णन करा.

४ उदम्भांसि, उपकण्ठम्, जयस्तम्भाः, उत्खातप्रतिरोपिताः, गृहीतप्रतिमुक्तः, गजसाधनः, उत्कलादर्शितपथः—हे समास सोडवून त्यांचीं नांवे सांगा.

पाठ कराः—कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ।

---

# पाठ ४४

## वेणीसंहारः ।

[ 'दुर्योधनाला मारून त्याच्या रक्तानें माखलेल्या हातानें तुझी वेणी घालीन' अशी प्रतिज्ञा भीमानें केली होती. परंतु मध्येंच, भीम मारला गेला अशी खोटी बातमी ऐकून द्रौपदीनें सती जाण्याकरितां चिता पेटवावयास सांगितली. इतक्यात दुर्योधनाला मारून भीमसेन येतो. त्याला प्रथम कोणी ओळखीत नाही, त्या वेळचा हा कथाभाग आहे. हा 'वेणीसंहारम्' नाटकांतील आहे.

( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः )

**भीमसेनः**—( उद्धतं परिक्रामन् ) भो भोः समन्तपञ्चकसञ्चारिणः सैनिकाः कोऽयमावेगः । कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

**द्रौपदी**—( लब्धसंज्ञा )परित्रायतां परित्रायतां महाराजः ।

**कञ्चुकी**—देवि पाण्डुस्नुषे उत्तिष्ठोत्तिष्ठ । सम्प्रति झटिति चिताप्रवेश एव श्रेयान् ।

**द्रौपदी**—( सहसोत्थाय ) कथं न सम्भावयाम्यद्यापि चितासमीपम् ।

**युधिष्ठिरः**—कः कोऽत्र भोः । सनिषङ्गं धनुरुपनय । कथं न कश्चित्परिजनः । भवतु । बाहुयुद्धेनैव दुरात्मानं गाढमालिङ्ग्य ज्वलनमभिपातयामि । ( परिकरं बध्नाति )

**कञ्चुकी**—देवि पाण्डुस्नुषे, संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्धजाः । अस्तमिता सम्प्रति प्रतीकाराशा । चितासमीपमेव द्रुततरं सम्भावय ।

युधिष्ठिरः—कृष्णे न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधने संहर्तव्याः केशाः।

भीमसेनः—पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना। तिष्ठतु तिष्ठतु। स्वयमेवाहं संहरामि।

द्रौपदी—( भयादपसर्पति )

भीमसेनः—तिष्ठ तिष्ठ भीरु क्वाधुना गम्यते। ( इति केशेषु ग्रहीतुमिच्छति )

युधिष्ठिरः—( वेगाद्भीममालिङ्ग्य ) दुरात्मन् भीमार्जुनशत्रो सुयोधनहतक,

आशैशवादनुदिनं जनितापराधो मत्तो बलेन भुजयोर्हतराजपुत्रः।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य जीवन् प्रयासि न पदात्पदमद्य पाप॥

भीमसेनः—अये कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति।

कञ्चुकी—( उपसृत्य। सहर्षम् ) महाराज वञ्च्यसे। अयं खल्वायुष्मान् भीमसेनः सुयोधनक्षतजारुणीकृतशरीराम्बरो दुर्लक्ष्यव्यक्तिः। अलमधुना सन्देहेन।

चेटी—( द्रौपदीमालिङ्ग्य ) देवि निवर्त्यतां निवर्त्यताम्। एष खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामन्विष्यति।

द्रौपदी—हञ्जे, किं मामलीकवचनैराश्वासयसि।

युधिष्ठिरः—जयन्धर, किं कथयसि नायमनुजद्वेषी दुर्योधनहतकः।

भीमसेनः—देव अजातशत्रो भीमार्जुनगुरो कुतोऽद्यापि दुर्योधनहतकः। मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनः—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या।

भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥

**युधिष्ठिरः**—( स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि प्रमार्जयति )

**भीमसेनः**—( पादयोः पतित्वा ) जयत्वार्यः ।

**युधिष्ठिरः**—वत्स बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । तत्कथय कच्चिज्जीवति भवान्समं किरीटिना ।

**भीमसेनः**—निहतसकलरिपुपक्षे नराधिपे जीवति भीमोऽर्जुनश्च ।

**युधिष्ठिरः**—किमपरमवशिष्टम् ।

**भीमसेनः**—आर्य सुमहदवशिष्टम् । संयच्छामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

**युधिष्ठिरः**—सत्वरं गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् ।

**भीमसेनः**—( द्रौपदीमुपसृत्य ) देवि पाञ्चालराजतनये दिष्ट्या वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन । भवति वेदिसम्भवे याज्ञसेनि ।

**द्रौपदी**—आज्ञापयतु नाथः ।

**भीमसेनः**—स्मरति भवती यत्तन्मयोक्तम् ।

**द्रौपदी**—नाथ न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन ।

**भीमसेनः**—( वेणीमवधूय ) भवति, संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलितेयं वेणी ।

**द्रौपदी**—नाथ विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।

चेटी—( वेणीं बध्नाति )

( नेपथ्ये )

महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय ।

क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि

प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ।

कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां

दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥

युधिष्ठिरः—देवि एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसञ्चारिणा सिद्धजनेन ।

वेणीसंहारम् ।

---

## टीपा

समन्तपंचकम्—कुरुक्षेत्राजवळील प्रदेश.

सम् + भू ( प. )—जवळ जाणें.

काच्चित् या अव्ययाचा उपयोग प्रश्नारंभी करतात व त्या प्रश्नाचें उत्तर प्रश्नाच्या रचनेवर होय किंवा नाही असें अवलंबून असतें.

' दिष्ट्या—वृध्—अभिनन्दन करणें '—ज्या गोष्टीबद्दल अभिनंदन करावयाचें त्या अर्थाच्या शब्दाची तृतीया योजतात.

---

## प्रश्न

१ हा संवाद विद्यार्थ्यांकडून पाठ करवून घ्यावा.

२ केन कारणेन द्रौपदी पावकं प्रवेष्टुमुद्यता । युधिष्ठिरेण भीमः कथं नाभिज्ञातः । पाण्डवैः शत्रूणामवस्था कीदृशी कृता ।

३ सनिषङ्गं धनुरुपनय। किं मामलीकवचनैराश्वासयसि। अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम्—या वाक्यांचा प्रयोग बदला.

४ प्रत्याशम्, कुपितयमसखः, रणाग्निः, भुजपञ्जरः, गदापाणिः—हे समास सोडवून त्यांची नांवे सांगा.

पाठ करा:—(१) रुधिरासृग्लोहितास्त्ररक्तक्षतजशोणितम्।
(२) चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः॥

# पाठ ४५

## दिलीपसुतवर्णनम्।

[रघु राजाच्या जन्माच्या वेळचें वर्णन या श्लोकांत आहे.]

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्॥१॥
अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा॥
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव॥ २ ॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे॥ ३ ॥
निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि॥ ४ ॥
स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ॥ ५ ॥
सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम्।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि॥६॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥७॥
रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ ८ ॥
उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥९॥
स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ १० ॥

रघुवंशम् ।

---

## टीपा

अरिष्टशय्या—बाज.

शरजन्मन्—कार्तिकेयः

न केवलम्—अपि—केवळ एक गोष्ट नव्हे तर आणखी दुसरी गोष्ट असा दोन वाक्यांनीं अर्थ दाखवावयाचा असतां पहिल्या वाक्याबरोबर ' न केवलम् ' योजतात व दुसऱ्या वाक्यात ' अपि, अपि तु ' असे शब्द योजतात.

गुरुः प्रहर्षः प्रबभूव नात्मनि—मोठा आनंद पोटांत मावला नाही.

---

## प्रश्न

१ या कवितांचा सारांश सोप्या संस्कृतमध्यें लिहा.

२ या उताऱ्यांत आलेल्या द्वितीयभूतकाळी रूपांतील धातूंचीं द्वि. भविष्य-काळी तृ. पु ए. वचनी रूपें लिहा.

३ या उताऱ्यांतील कोणत्याहि तीन उपमा घेऊन त्याचें स्पष्टीकरण करा.

४ शंस्, न केवलम्–अपि, यथा–तथा; दिष्ट्या वृध्—याचा उपयोग स्वतःच्या वाक्यांत करा.

पाठ करा:—मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ।
स्यादानन्दथुरानन्दः शर्मसातसुखानि च ॥

---

